व्याख्यानमालाया विषयानुक्रमः

॥ सत्यमेव जयते नानृतम् ॥



श्री स्वामी अच्युतानन्द जी

"अमृत प्रैस," लाहौर ॥

# ओ३म्

# परमेश्वर-महिमा १



ऋग्वेदे ॥ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥१॥ त्वमसि प्रशस्यो विदथेषु सहन्त्य । अग्ने रथीरध्वराणाम् ॥२॥ उप त्वाऽग्ने दिवे दिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसि ॥३॥ स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ॥४॥ देवो देवानामसि मित्रोऽद्भुतो वसुर्वसूनामासि चारुरध्वरे । शर्मन्स्याम तव सप्रथस्तमेऽग्ने सख्ये मा रिषामा वयं तव ॥५॥ ऊर्ध्वो नः पाह्यंहसो निकेतुना विश्वं समत्रिणं दह । कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवः ॥६॥ वायवायाहि दर्शतेमे सोमा अरङ्कृताः । तेषां पाहि श्रुधी हवम् ॥ ७ ॥ उत वात पितासि न उत भ्रातोत नः सखा । स नो जीवातवे कृधि ॥ ८ ॥ ऋजुनीती नो वरुणो मित्रो नयतु विद्वान् । अर्यमा देवैः सजोषाः ॥९॥ सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते । त्वामभिप्रणोनुमो जेतारमपराजितम् ॥ १० ॥ त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा । त्वं भद्रोऽसि क्रतुः ॥११॥ त्वं नः सोम विश्वतो रक्षा राजन्नघायतः । न रिष्येत्त्वावतः

मता ॥ १२ ॥ सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः। सुमृडीको न आविश ॥ १३ ॥ समीचीनं भगवतस्त्युपस्पतिं धिय मिन्वमवभे हुमहे वयम्। पूषा नो यथा वेदसामसद् वृधे रक्षिता पायुरदब्धः स्वस्तये ॥१४॥ स्वस्तिपन्थामनुचरेम सूर्या चन्द्रमसाविव। पुनर्ददताऽघ्नता जानता सङ्गमेमहि॥१५॥ इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥ १६ ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुरा ततम् ॥१७॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते। विष्णोर्यत्परमं पदम् ॥ १८ ॥ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्यः सखा ॥१९॥ शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥ २०॥ यजुर्वेदे। नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे अन्यास्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यं शिवो भव ॥ २१॥ नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे। नमस्ते भगवन्नस्तु यतः स्वः समीहसे ॥ २२॥ यतो यतः समीहसे ततो नो अभयं कुरु। शं नः कुरु प्रजाभ्योऽभयं नः पशुभ्यः॥२३॥ विश्वानि देव सवितर्दुरितानि परासुव। यद्भद्रं तन्न आसुव॥ २४॥ यां मेधां देवगणाः पितरश्चोपासते। तया मामद्य मेधयाऽग्ने मेधाविनं कुरु स्वाहा ॥ २५ ॥ मनुष्याऽभयमसि तन्वं मे पाहि।

आयुर्दा अग्नेऽस्यायुर्मे देहि । वर्चोदा अग्नेऽसि वर्चो मे देहि । अग्ने यन्मे तन्वा ऊनं तन्म आपृण ॥२६॥ अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् । इदमहमनृतात्सत्यमुपैमि ॥२७॥ तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः । तदेव शुक्रं तद्ब्रह्म ता आपः स प्रजापतिः॥२८॥तस्माद्यज्ञात्सर्वहुत ऋचःसामानि जज्ञिरे । छन्दाᳬसि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥२९॥रुचं नो धेहि ब्राह्मणेषु रुचᳬराजसु नस्कृधि। रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम्॥३०॥ न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव । नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥३१॥ यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति। दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु ॥३२॥ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाᳬसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥३३॥ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥३४॥ य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः । यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम॥३५॥यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥३६॥ तदेजति तन्नै-

जति तद्दूरे तद्वन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्यास्य
बाह्यतः ॥३७॥ स पर्य्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्ध-
मपापविद्धम् । कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽ
र्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ३८ ॥ अग्ने नय सुपथा
राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जु
हुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ॥३९॥ यन्मे छिद्रं
चक्षुषो हृदयस्य मनसो वाऽतितृण्णं बृहस्पतिर्मे तद्दधातु । शं
नो भवतु भुवनस्य यस्पतिः ॥४०॥ सामवेदे ॥ अग्न आयाहि
वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥ ४१ ॥
नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः । अमैरमित्रमर्दय ॥४२॥
कविमग्निमुपस्तुहि सत्यधर्माणमध्वरे । देवममीवचातनम् ॥४३॥
आत्वेता निषीदतेन्द्रमभिप्रगायत । सखाय स्तोमवाहसः ॥४४॥
नकि इन्द्र त्वदुत्तरं न ज्यायो अस्ति वृत्रहन् । न क्येवं यथा
त्वम् ॥४५॥ अर्चत प्रार्चता नरः प्रियमेधासो अर्चत । अर्चन्तु
पुत्रका उत पुरमिद्धृष्ण्वर्चत ॥ ४६ ॥ त्वमिन्द्राभिभूरसि
त्वꣳ सूर्यमरोचयः । विश्वकर्मा विश्वदेवो महाꣳ असि ॥ ४७ ॥
त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ । अधा ते
सुम्नमीमहे ॥४८॥ इन्द्रमीशानमोजसाऽभिस्तोमैरनूषत । सहस्रं
यस्य रातय उत वा सन्ति भूयसीः ॥ ४९ ॥ त्वं सामिमना
नामयेऽनिमिषा भाभ ।मय । मया मामिभ्य इत्य ॥ ५० ॥

अथर्ववेदे ॥ यो भूतञ्च भव्यञ्च च सर्वं यश्चाधितिष्ठति । स्वर्यस्य च केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥५१॥ प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु । प्रियं सर्वस्य पश्यत उत शूद्र उतार्ये॥५२॥पुनरेहि वाचस्पते देवेन मनसा सह । वसोष्पते निरमय मय्येवास्तु मयि श्रुतम् ॥ ५३ ॥ इन्द्रश्च मृडयाति नो न नः पश्चादघं नशत् । भद्रं भवाति नः पुरः ॥५४॥शान्ता द्यौः शान्ता पृथिवी शान्तमिदमुर्वऽन्तरिक्षम् । शान्ता उदन्वतीरापः शान्ता नः सन्त्वोषधीः ॥५५॥ प्राणाय नमो यस्य सर्वमिदं वशे । यो भूतः सर्वस्येश्वरो यस्मिन्त्सर्वं प्रतिष्ठितम् ॥५६॥ न त्वदन्यः कवितरो न मेधया धीरतरो वरुण स्वधावन् । त्वं ता विश्वा भुवनानि वेत्थ स चिन्नु त्वज्जनो मायी विभाय ॥५७॥ अकामो धीरो अमृतः स्वयम्भू रसेन तृप्तो न कुतश्चनोनः । तमेव विद्वान्न विभाय मृत्योरात्मानं धीरमजरं युवानम् ॥५८॥ धाता दधातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन यच्छतु ॥ ५९ ॥ यो अग्नौ रुद्रो यो अप्स्वन्तर्य ओषधीर्वीरुध आविवेश । य इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नमो अस्त्वग्नये ॥६०॥ *॥ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥६१॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषां हृदिस्थो भगवान्मङ्गलायतनो हरिः ॥६२॥ सर्वदा सर्वकार्येषु

नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान्मङ्गलायतनो हरिः ॥ ६३ ॥ अशुभानि निराकृत्य तनोति शुभसन्ततिम् । स्मृतिमात्रेण यत्पुंसां ब्रह्म तन्मङ्गलं विदुः ॥ ६४ ॥ स्मृते सकलकल्याणभाजनं यत्र जायते । पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥६५॥ हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥६६॥ जगतां यदि नो कर्ता कुलालेन विना घटः । चित्रकारं विना चित्रं स्वत एव भवेत्तदा ॥ ६७ ॥ भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥६८॥ एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥६९॥ दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥७०॥ एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥७१॥ यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते ॥७२॥ सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि । सम्पश्यन् ब्रह्म परमं याति नान्येन हेतुना ॥ ७३ ॥ स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् । स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः ॥७४॥ एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् । इन्द्रमेकेऽपरे प्राणमपरे ब्रह्म शाश्वतम् ॥ ७५ ॥ यो देवोऽग्नौ

यो ऽप्सु यो विश्वं भुवनमाविवेश । य ओषधिषु यो वन-
स्पतिषु तस्मै देवाय नमो नमः ॥ ७६ ॥ अग्निर्मूर्द्धा चक्षुषी
चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो
हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा॥७७॥
अशब्दमस्पर्शमरूपमव्ययं तथा ऽरसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्यतं मृत्युमुखात्प्रमुच्यते॥७८॥
एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्
॥ ७९ ॥ नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो
विदधाति कामान् । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां
शान्तिः शाश्वती नेतरेषाम् ॥ ८० ॥ य एकोऽवर्णो बहुधा
शक्तियोगाद् वर्णाननेकान्निहितार्थो दधाति । विचैति चान्ते
विश्वमादौ स देवः स नो बुद्ध्या शुभया संयुनक्तु ॥ ८१ ॥
अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाःसृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः
॥८२॥ द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥८३॥
समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं
यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ ८४ ॥
यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।

तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥८५॥
बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति ।
दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम् ॥८६॥
नायमात्मा प्रवचनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गात् ।
एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ॥८७॥
स एव काले भुवनस्यास्य गोप्ता विश्वाधिपः सर्वभूतेषु गूढः ।
यस्मिन्युक्ता ब्रह्मर्षयो देवताश्च तमेवं ज्ञात्वा मृत्युपाशांश्छि
नत्ति ॥८८॥ यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः
संभवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्संभवतीह
विश्वम् ॥ ८९ ॥ स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो
गुणी सर्वविद्यः । प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थिति
बन्धहेतुः ॥ ९० ॥ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च
प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरण-
महं प्रपद्ये ॥९१॥ नमस्ते सते ते जगत्कारणाय नमस्ते चिते
सर्वलोकाश्रयाय । नमोऽद्वैततत्त्वाय मुक्तिप्रदाय नमो ब्रह्मणे
व्यापिने शाश्वताय ॥९२॥ त्वमेकं शरण्यं त्वमेकं वरेण्यं त्वमेकं
जगत्पालकं स्वप्रकाशम् । त्वमेकं जगत्कर्तृ पातृ प्रहर्तृ त्वमेकं
परं निश्चलं निर्विकल्पम् ॥९३॥ भयानां भयं भीषणं भीषणा
नां गतिः प्राणिनां पावनं पावनानाम् । महोच्चैः पदानां नियन्तृ
त्वमेकं परेषां परं रक्षणं रक्षणानाम् ॥९४॥ वयन्त्वां स्मरामो

वयन्त्वां भजामो वयन्त्वा जगत्साक्षिरूपं नमामः। सदेकं निधानं निरालम्बमीशं भवाम्भोधिपोतं शरण्यं व्रजामः॥९५॥ विदुर्यं न चित्तेन्द्रियाणीन्द्रियेशं विजानाति यस्तानि नित्यं नियन्ता। जगत्साक्षिणं व्यापकं विश्ववन्द्यं चिदानन्दरूपं तमीशं प्रपद्ये॥ ९६॥ अणोरप्यणीयान्महद्भ्यो महीयान् रवीन्दुग्रहज्याभगोलादिकर्ता। य ईशो हि सृष्ट्यादिमध्यान्त-संस्थश्चिदानन्दरूपं तमीशं प्रपद्ये॥ ९७॥ वशे यस्य विश्वं समस्तं सदाऽऽस्ते यदाभासतो भाति यद्वै विचित्रम्। न जानन्ति यन्तत्त्वतो योगिनोऽपि चिदानन्दरूपन्तमीशं प्रपद्ये॥ ९८॥ त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव। त्वमेव विद्या द्रविणन्त्वमेव त्वमेव सर्वं मम देवदेव॥९९॥तमीश्वराणां परमं महेश्वरन्तन्देवतानां परमञ्च दैवतम्। पतिम्पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्॥१००॥ एको देवः सर्वभूतेषु गूढःसर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षःसर्वभूताधिवासःसाक्षी चेता केवलो निर्गुणश्च॥१०१॥ अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः। स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्॥१०२॥अणोरणीयान्महतो महीयानात्माऽस्य जन्तोर्निहितो गुहायाम्। तमक्रतुःपश्यति वीतशोको धातुः प्रसादान्महिमा-नमात्मनः॥१०३॥ न तस्य कार्यं करणञ्च विद्यते न तत्सम-

साम्यमिकं भवत्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥ १०४ ॥ न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् । स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ॥१०५॥ न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति॥१०६॥ नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् ॥१०७॥ न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । हृदा हृदिस्थं मनसा य एनमेवं विदुरमृतास्ते भवन्ति ॥ १०८ ॥ भूः पादौ यस्य नाभिर्वियदसुरनिलश्चन्द्रसूर्यौ च नेत्रे कर्णावाशाः शिरो द्यौर्मुखमपि दहनो यस्य वास्तव्यमब्धिः । अन्तःस्थं यस्य विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यैश्चित्रं रंरम्यते तं त्रिभुवनवपुषं विष्णुमीशं नमामि ॥१०९॥

# धर्मवर्णनम् २

सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः । सुखं च न विना धर्मात्तस्माद्धर्मपरो भवेत् ॥ १ ॥ धर्मं शनैः संचिनुयाद्वल्मीकमिव पुत्तिकाः । परलोकसहायार्थं सर्वभूतान्यपीडयन् ॥ २ ॥ नामुत्र हि सहायार्थं पिता माता च तिष्ठतः । न

पुत्रदारा न ज्ञातिर्धर्मस्तिष्ठति केवलः ॥ ३ ॥ एकः प्रजायते जन्तुरेक एव प्रलीयते । एको नु भुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥४॥ एकः पापानि कुरुते फलं भुङ्क्ते महाजनः । भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ॥ ५ ॥ मृतं शरीरमुत्सृज्य काष्ठलोष्ठसमं क्षितौ । विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥ ६ ॥ तस्माद्धर्मं सहायार्थं नित्यं संचिनुयाच्छनैः । धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥७॥ एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः । शरीरेण समं नाशं सर्वमन्यद्धि गच्छति ॥ ८ ॥ धनानि भूमौ पशवश्च गोष्ठे भार्या गृहद्वारि जनः श्मशाने । देहश्चितायां परलोकमार्गे कर्मानुगो गच्छति जीव एकः ॥९॥ धर्मे मतिर्भवतु वः सततोत्थितानां सह्येक एव परलोकगतस्य बन्धुः । अर्थाः स्त्रियश्च निपुणैरपि सेव्यमाना नैवाप्तभावमुपयान्ति न च स्थिरत्वम् ॥ १० ॥ वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा । सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुरा कृतानि ॥११॥ सकलाऽपि कला कलावतां विकला पुण्यकलां विना खलु । सकले नयने वृथा यथा तनुभाजां हि कनीनिका विना ॥ १२ ॥ आयुः क्षणलवमात्रं न लभ्यते हेमकोटिभिः क्वापि । तच्चेद्गच्छति सर्वं मृषा ततः काऽधिका हानिः ॥ १३ ॥ अनित्यानि शरीराणि विभवो नैव शाश्वतः । नित्यः संनिहितो

मृत्युः कर्तव्यो धर्मसंग्रहः ॥ १४ ॥ यावत्स्वस्थमिदं देहं
यावन्मृत्युश्च दूरतः । तावदात्महितं कुर्यात्प्राणान्ते किं
करिष्यति ॥ १५ ॥ युवैव धर्मशीलः स्यादनित्यं खलु
जीवितम् । को हि जानाति कस्याद्य मृत्युकालो भविष्यति
॥ १६ ॥ जीवन्तं मृतवन्मन्ये देहिनं धर्मवर्जितम् । मृतो
धर्मेण संयुक्तो दीर्घजीवी न संशयः ॥ १७ ॥ अजरामर
वत्प्राज्ञो विद्यामर्थं च चिन्तयेत् । गृहीत इव केशेषु मृत्युना
धर्ममाचरेत् ॥ १८ ॥ उत्थायोत्थाय बोद्धव्यं किमद्य सुकृतं
कृतम् । आयुषः खण्डमादाय रविरस्तं गमिष्यति ॥ १९ ॥
अस्थिरं जीवितं लोके ह्यस्थिरे धनयौवने । अस्थिराः
पुत्रदाराश्च धर्मः कीर्तिर्द्वयं स्थिरम् ॥ २० ॥ मुहूर्तमपि
जीवेच्च नरः शुक्लेन कर्मणा । न कल्पमपि पापेन लोकद्वय
विरोधिना ॥ २१ ॥ यस्यात्मा विरतः पापात्कल्याणे च निवे
शितः । तेन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ॥ २२ ॥
यौवनं जीवितं चित्तच्छाया लक्ष्मीश्च स्वामिता । चञ्चलानि
षडेतानि ज्ञात्वा धर्मरतो भवेत् ॥ २३ ॥ सर्वमात्मनि संपश्ये
त्सच्चासच्च समाहितः । सर्वमात्मनि संपश्यन्नाधर्मे कुरुते मनः
॥ २४ ॥ दिवसेनैव तत्कुर्याद्येन रात्रौ सुखं वसेत् । अष्टमा-
सेन तत्कुर्याद्येन वर्षाः सुखं वसेत् ॥ २५ ॥ पूर्वे वयसि
तत्कुर्याद्येन वृद्धः सुखं वसेत् । यावज्जीवेन तत्कुर्याद्येनामुत्र

सुखं वसेत् ॥२६॥ धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम् । सैव नौः सागरस्येव वणिजः पारमिच्छतः ॥ २७ ॥ अफलो यदि धर्मः स्याच्चरितो धर्मचारिभिः । अप्रतिष्ठे तमस्येतज्जगन्मज्जेदनिन्दिते ॥२८॥ वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥ २९ ॥ श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्हि मानवः । इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥३०॥ सुखितस्य दुःखितस्य च संसारे धर्म एव तत्र कार्यः । सुखितस्य तदभिवृद्ध्यै दुःखभुजस्तदुपघाताय ॥ ३१ ॥ सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम् । तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः ॥ ३२ ॥ येषां च बहवः शूरा ज्ञातयो धर्ममाश्रिताः । ते जीवन्ति सुखं लोके कर्षन्ति च महद्यशः ॥ ३३ ॥ विद्या रूपं धनं शौर्यं कुलीनत्वमरोगता । राज्यं स्वर्गश्च मोक्षश्च सर्वं धर्म्मादवाप्यते ॥ ३४ ॥ शक्तिमानप्यशक्तोऽसौ धनवानपि निर्धनः । श्रुतवानपि मूर्खश्च यो धर्मविमुखो नरः ॥३५॥ धर्मादपेतं यत्कर्म यद्यपि स्यान्महाफलम् । न तत्सेवेत मेधावी नहि तद्धितमुच्यते ॥ ३६ ॥ न हर्तव्यं परधनं धर्म्म एष सनातनः । मन्यन्ते बलवन्तस्तं दुर्बलैः संप्रकीर्तितम् ॥ ३७ ॥ न ह्यत्यन्तं बलवन्तो भवन्ति सुखिनो ऽपि वा । तस्मादनार्जवे बुद्धिर्न कार्या ते कदाचन

॥३८॥ आत्मत्यागेतिच धर्मे सक्तो भूतहिते रतः । न मन्यन्ते यन्मनुजाः कृपणैः समवर्तितम् ॥ ३९ ॥ यदा निवर्तितकार्पण्य मयैवायमेव रोचते । न ग्रस्यन्ते धनवन्तो भवन्ति ह्यसिनोऽपि वा ॥ ४० ॥ वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः । तद्धि कुर्वन्यथाशक्ति माप्नोति परमां गतिम् ॥ ४१ ॥ धर्मो माता पिता चैव धर्मो बन्धुः सुहृत्तथा । धर्म स्वर्गस्य सोपानं धर्मात्स्वर्गमवाप्यते ॥ ४२ ॥ आर्षं धर्मोपदेशं च वेदशास्त्रा विरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥ ४३ ॥ ये सन्तुष्टा श्रुतिपरा महात्मानो महावसा । धर्म्यं पन्थानमा रूढास्तानुपासस्व पृच्छ च ॥ ४४ ॥ अवधाय मत तेषां बुधानां धर्मदर्शिनाम् । नियच्छ परया बुद्ध्या चित्तमुत्पथ गामि वै ॥ ४५ ॥ मनो हि सवभूतानां मन्वनोति शुभा शुभम् । अशुभेभ्यस्तदाक्षिप्य शुभेऽर्थे चावधारय ॥ ४६ ॥ कामं क्रोधं भयं लोभं दम्भं मोहं मदं तथा । निद्रां मत्सरमालस्यं नास्तिक्यं च परित्यज ॥ ४७ ॥ सत्यमार्जव मक्रोधमनसूया दमं शमः । अहिंसां चानृशंस्यं च क्षमां चैवानुपास्य ॥ ४८ ॥ सोपानभूतं स्वर्गस्य मानुष्यं माप्य दुर्लभम् । तथात्मानं समाधत्स्व भ्रश्यसे न पुनर्यथा ॥ ४९ ॥ मा नृशस्यमहिंसा चाप्रमादः सविभागिता । श्राद्धकर्मा तिथेयश्च सत्यमक्रोध एव च ॥ ५० ॥ स्वेषु दारेषु सन्तोषः

शौचं नित्यानुसूयता । आत्मज्ञानं तितिक्षा च धर्माः साधारणा नृप ॥ ५१ ॥ यश्च प्राज्ञो नरस्तात सात्त्विकीं वृत्तिमास्थितः । तस्यैश्वर्य्यं च धैर्यं च व्यवसायश्च कर्मसु ॥ ५२ ॥ यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत् । यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५३ ॥ धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः । धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥ ५४ ॥ चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजः । दशलक्षणको धर्मः सेवितव्यः प्रयत्नतः ॥ ५५ ॥ पुत्रैर्मित्रैर्गृहैर्दारैर्वियुक्तस्य धनेन वा । मग्नस्य व्यसने कृच्छ्रे पुंसः श्रेयस्करी धृतिः ॥ ५६ ॥ धैर्येण युक्तं सततं शरीरं न विशीर्यते । विशोकता सुखं धत्ते धत्ते चारोग्यमुत्तमम् । आरोग्याच्च शरीरस्य स पुनर्विन्दते श्रियम् ॥ ५७ ॥ सपदि विलयमेतु राजलक्ष्मीरुपरि पतन्त्वथवा कृपाणधाराः ॥ अपहरतुतरां शिरः कृतान्तो मम तु मतिर्न मनागपैतु धर्मात् ॥ ५८ ॥ धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्बलम् धर्मेणैव भवन्ति निर्मलयशोविद्यार्थसम्पत्तयः । कान्ताराच्च महाभयाच्च सततं धर्मः परित्रायते धर्मः सम्यगुपासितो भवति हि स्वर्गापवर्गप्रदः ॥ ५९ ॥ धर्मः सर्वसुखंकरो हितकरो धर्मं बुधाश्चिन्वते धर्मेणैव समाप्यते शिवसुखं धर्माय तस्मै नमः । धर्मान्नास्त्यपरः सुहृद्भवभृतां धर्मो हि

द्रव्यं सतां धर्मे चित्तमः दधे मातिदिने हे भा र्मा पाश्रय ॥ ६० ॥ संक्षेपात्कथ्यते धर्मो जनाः किं विस्तरेण वः । परोपकारः पुण्याय पापाय परपीडनम् ॥ ६१ ॥ आरम्भो न्याययुक्तो यः स हि धर्म इति स्मृतः । अनाचारस्त्वधर्मेति एतच्छिष्टानुशासनम् ॥ ६२ ॥ इज्याऽध्ययनदानानि तपः सत्यं क्षमा दमः । अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥ ६३ ॥ श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् । आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ ६४ ॥ यथा यथा हि पुरुषः कल्याणे कुरुते मनः । तथा तथाऽस्य सर्वार्थाः सिध्यन्ते नात्र संशय ॥ ६५ ॥ सर्वेषां यः सुहृन्नित्यं सर्वेषां च हिते रतः । कर्मणा मनसा वाचा स धर्मं वेद नेतरः ॥ ६६ ॥ अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा । अनुग्रहश्च दानञ्च सतां धर्मः सनातनः ॥७०॥ यद्यदिष्टतमं लोके यच्चात्मनो दयितं गृहे । तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥ ६७ ॥ अहिंसा सत्यमक्रोधो दानमेतच्चतुष्टयम् । अजातशत्रो सेवस्व धर्म एष सनातनः ॥ ६८ ॥ सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् । प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः ॥ ६९ ॥ ब्राह्मणः पात्रभेदाश्च दयामभ्यासयेत्सुतान् । गोपयेत्स्वजनांश्च भूतेषु धर्मः सनातनः ॥७०॥ अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः । स्वधर्मे च व्यवस्थानं

शौचमित्यभिधीयते॥७२॥ब्रह्मचर्यं तथासत्यमनुक्रोशो धृतिः क्षमा।
सनातनस्य धर्मस्य मूलमेतत्सनातनम्॥७३॥ अकृत्यं नैव कर्तव्यं
प्राणत्यागेऽप्युपस्थिते। न च कृत्यं परित्याज्यमेष धर्मः सनातनः ॥ ७४ ॥ दमं निःश्रेयसे प्राहुर्वृद्धा निश्चितदर्शिनः।
ब्राह्मणस्य विशेषेण दमो धर्मः सनातनः ॥७५॥ यथा पत्याश्रयो धर्मः स्त्रीणां लोके सनातनः। अपवर्गमतिर्नित्यो यतिधर्मः सनातनः ॥ ७६ ॥ विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः। उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥७७॥
नास्तिक्यं वेदनिन्दाञ्च देवतानाञ्च कुत्सनम्। द्वेषं दम्भञ्च
मानञ्च क्रोधं तैक्ष्ण्यञ्च वर्जयेत् ॥७८॥ परापवादं न ब्रूयान्नाप्रियञ्च कदाचन। न मन्युः कश्चिदुत्पाद्यः पुरुषेण सुखार्थिना
॥ ७९ ॥ अध्रुवेण शरीरेण प्रतिक्षणविनाशिना। ध्रुवं यो
नार्ज्जयेद्धर्मं स शोच्यो मूढचेतनः ॥ ८० ॥ धर्म एव हतो
हन्ति धर्मो रक्षति रक्षितः। तस्माद्धर्मो न हातव्यो मा नो धर्मो
हतोऽवधीत् ॥ ८१ ॥ यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन
च। हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ॥ ८२ ॥ धर्मस्य
तस्य लिङ्गानि दया क्षान्तिरहिंसनम्। तपो दानञ्च
शीलञ्च सत्यं शौचं वितृष्णता ॥ ८३ ॥ सत्यादुत्पद्यते धर्मो
दयादानाद्विवर्द्धते। क्षमया तिष्ठते धर्मः क्रोधाद्धर्मो विनश्यति
॥८४॥अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः। एतं सामासिकं

धर्मं धातुमर्व्वेऽप्रवीन्मनुः ॥ ८५ ॥ आर्जवं धर्ममित्याहुरधर्मो जिह्म उच्यते । आर्जवेनेह सयुक्तो नरो धर्मेण युज्यते॥८६॥ मनपेदेषु वा स्नानं सर्वभूतेषु चार्जवम् । उभे एते समे स्या त्तामार्जवं वा विशिष्यते ॥८७॥ ऋषियज्ञं देवयज्ञं भूतयज्ञञ्च सर्वदा । नृयज्ञं पितृयज्ञञ्च यथाशक्ति न हापयेत् ॥ ८८ ॥ अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलि र्भौतो नृयज्ञोऽतिथिपूजनम् ॥८९॥ पञ्चयज्ञांस्तु यो मोहान्न करोति गृहाश्रमे । तस्य नायं न च परो लोको भवति धर्मतः ॥९०॥ बालो वा यदि वा वृद्धो युवा वा गृहमागतः । तस्य पूजा विधातव्या सर्वस्याभ्यागतो गुरुः ॥ ९१ ॥ उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः । पूजनीयो यथायोग्यं सर्वस्या भ्यागतो गुरुः ॥ ९२ ॥ राज्यञ्च सम्पदाभोगाः कुले जन्म सुरूपता । पाण्डित्यमायुरारोग्यं धर्मस्यैतत्फलं विदुः ॥ ९३ ॥ सुकुलजन्म विभूतिरनेकधा प्रियसमागमसौख्यपरम्परा । नृप कुले गुरुता विमलं यशो भवति पुण्यतरोः फलमीदृशम् ॥९४॥ प्रियवचनवादी प्रियो भवति विश्वसितकार्यकरोऽधिकं जयति । बहुमित्रकरः सुखं वसते यश्च धर्मरतः स गतिं लभते ॥ ९५ ॥ न जातु कामान्न भयान्न लोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः । नित्यो धर्मः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य त्वनित्यः ॥ ९६ ॥ न सीदन्नपि धर्मेण मनोऽधर्मे निवेशयेत् ।

अधार्मिकाणां पापानामाशु पश्यन्विपर्ययम् ॥९७॥ अधार्मिको नरो यो हि यस्य चाप्यनृतं धनम् । हिंसारतश्च यो नित्यं नेहासौ सुखमेधते ॥ ९८ ॥ धर्मं प्रसङ्गादपि नाचरन्ति पापं प्रयत्नेन समाचरन्ति । आश्चर्यमेतद्धि मनुष्यलोकेऽमृतं परित्यज्य विषं पिबन्ति ॥९९॥ आहारनिद्राभयमैथुनञ्च सामान्यमेतत्पशुभिर्नराणाम् । धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः ॥१००॥

# क्षमाप्रभावः ३

बाह्ये वा ऽभ्यन्तरे चैव दुःखे चोत्पादिते क्वचित् । न कुप्यति न वा हन्ति सा क्षमा परिकीर्तिता ॥१॥ क्षमा शस्त्रं करे यस्य दुर्जनः किं करिष्यति । अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥२॥ क्षमा बलमशक्तानां शक्तानां भूषणं क्षमा । क्षमा वशीकृतिर्लोके क्षमया किन्न साध्यते ॥३॥ नरस्याभरणं रूपं रूपस्याभरणं गुणः । गुणस्याभरणं ज्ञानं ज्ञानस्याभरणं क्षमा ॥ ४ ॥ क्षमा शत्रौ च मित्रे च यतीनामेव भूषणम् । अपराधिषु सत्त्वेषु नृपाणां सैव दूषणम् ॥ ५ ॥ यदि न स्युर्मनुष्येषु क्षमिणः पृथिवीसमाः । न स्यात्सन्धिर्मनुष्याणां क्रोधमूलो हि विग्रहः ॥ ६ ॥ क्षुधासमं नास्ति शरीरपीडनं चिन्तासमं नास्ति शरीरशोषणम् । विद्यासमं नास्ति शरीर-

भूषणं क्षमासमं नास्ति शरीररक्षणम् ॥ ७ ॥ आक्रोशपरिवा
दाभ्यां विहिंसन्त्यबुधा बुधान् । वक्ता पापमुपादत्ते क्षममाणो
विमुच्यते ॥ ८ ॥ यः परेषां नरो नित्यमतिवादांस्तितिक्षते ।
देवयानि विजानीहि तेन सर्वमिदं जितम् ॥९॥ यः संधारयेत
मन्युं योऽतिवादांस्तितिक्षते । यश्च तप्तो न तपति दृढ सो
ऽस्य भाजनम्॥१०॥क्रोधो मूलमनर्थानां क्रोधः संसारवर्द्धनः
। धर्मक्षयकरः क्रोधस्तस्मात्क्रोधं विवर्जयेत् ॥११॥ क्रोधस्य
कालकूटस्य विद्यते महदन्तरम् । स्वाश्रयं दहति क्रोधःकाल
कूटो न चाश्रयम् ॥ १२ ॥ उत्तमे तु क्षणं कोपो मध्यमे
घटिकाद्वयम् । अधमे स्यादहोरात्रं चाण्डाले मरणान्तिकं
॥१३॥ क्रोधो नाशयते धैर्य क्रोधो नाशयते श्रुतम् । क्रोधो
नाशयते सर्वं नास्ति कोपसमो रिपुः ॥ १४ ॥ यस्तु क्रोधं
समुत्पन्नं प्रज्ञया प्रतिबाधते । तेजस्विनन्तं विद्वांसो मन्यन्ते
तत्त्वदर्शिनः ॥१५॥ विपाके दुःखं कामस्य नाधुना सर्वदेहि
नाम् । विपाकेऽप्यधुना कोपः सर्वदा दुःखदः स्मृतः ॥१६॥
जायते यत्र स कोपस्तन्दहेदेव सर्वतः । विपयश्च कश्चित्कोपः
सफलो निर्दहेदयम्॥१७॥अश्वारोहं यथा दुष्टो वाजी गर्ते निपात
येत्। एवं क्रोधोऽपि नरके नरमाशु निपातयेत् ॥१८॥ सुखार्थि
नस्सतः पुंसो नास्ति कोपसमो रिपुः । ततः कोपो नियन्तव्यः
कामादप्यतिकष्टदः ॥ १९ ॥ क्रुद्धः पापं नरः कुर्यात्क्रुद्धो

हन्याद्गुरूनपि । क्रुद्धः परुषया वाचा श्रेयसोऽप्यवमन्यते ॥२०॥ वाच्यावाच्ये हि कुपितो न प्रजानाति कर्हिचित । नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते तथा ॥ २१ ॥ हिंस्यात्क्रोधादवध्यास्तु वध्यान्संपूजयीत च । आत्मानमपि च क्रुद्धः प्रेषयेद्यमसादनम् ॥२२॥ एतान्दोषान्प्रपश्यद्भिर्जितः क्रोधो मनीषिभिः । इच्छद्भिः परमं श्रेय इह चामुत्र चोत्तमम् ॥२३॥ अपकारिणि कोपश्चेत्कोपे कोपः कथं न ते । धर्मार्थ काममोक्षणां प्रसह्य परिपन्थिनि २४ मातरं पितरं पुत्रं भ्रातरं वा सुहृत्तमम् । क्रोधाविष्टो नरो हन्ति स्वामिनं वा सहोदरम् ॥२५॥ अबुद्धिमाश्रितानान्तु क्षन्तव्यमपराधिनाम् । नहि सर्वत्र पाण्डित्यं सुलभं पुरुषेण वै ॥२६॥ पूर्वोपकारी यस्ते स्यादपराधे गरीयसि । उपकारेण तत्तस्य क्षन्तव्यमपराधिनः ॥ २७ ॥ धन्यास्ते पुरुषव्याघ्रा ये बुद्ध्या कोपमुत्थितम् । निरुन्धन्ति महात्मानो दीप्तमग्निमिवाम्भसा ॥२८॥ फलान्वितो धर्मयशोऽर्थनाशनः स चेदपार्थः स्वशरीरतापनः । न चेह नामुत्र हिताय यः सतां मनांसि कोपः समुपाश्रयेत्कथम् ॥२९॥ न भवति भवति च न चिरं भवति चिरञ्चेत्फले वि-संवादी । कोपः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम् ॥३०॥ क्रोधो हि शत्रुः प्रथमो नराणां देहस्थितो देहविनाशनाय । यथास्थितः काष्ठगतो हि वह्निः स एव वह्निर्दहते च काष्ठम्

॥११॥ अपनेयमुदेतुमिच्छता तिमिरं रोषमयं धिया पुरः । अविभिद्य निशाकृतन्तमः प्रभया नांशुमताऽप्युदीयते ॥१२॥ नाक्रोशी स्यान्नावमानी परस्य मित्रद्रोही नोत नीचोपसेवी । न चाभिमानी न च हीनवृत्तो रूक्षां वाचं रुशतीं वर्जयीत ॥१३॥ मर्माण्यस्थीनि हृदयं तथाऽसून् रूक्षा वाचो निर्दहन्तीह पुंसाम् । तस्माद्वाचमुशतीमुग्ररूपां धर्मारामो नित्यशो वर्जयीत ॥ १४ ॥ परश्चेदेनमभिविध्येत बाणैर्भृशं सुतीक्ष्णैरनलार्कदीप्तैः । स विध्यमानोऽप्यतिदह्यमानो विद्यात्कविः सुकृतं मे दधाति ॥१५॥ न द्विषन्तः क्षयं यान्ति यावज्जीवमपि घ्नतः । क्रोधमेव तु यो हन्ति तेन सर्वे द्विषो हताः ॥१६॥ क्षमावतामयं लोकः परश्चैव क्षमावताम् । इह सन्मानमृच्छन्ति परत्र च शुभां गतिम् ॥ १७ ॥ क्षन्तव्यमेव सततं पुरुषेण विजानता । यदा हि क्षमते सर्वं ब्रह्म सम्पद्यते तदा ॥१८॥ मन्योर्हि विजयं कृष्णे प्रशंसन्तीह साधवः । क्षमावतो जयो नित्यं साधोरिह सतां मतम् ॥ १९ ॥ क्षन्तव्यं पुरुषेणेह सर्वापत्सु सुशोभने । क्षमावतो हि भूतानां जन्म चैव प्रकीर्तितम् ॥ २० ॥ नातः श्रीमत्तरं किञ्चिदन्यत्पथ्यतमं तथा । प्रभविष्णोर्यथा तात क्षमा सर्वत्र सर्वदा ॥ २१ ॥ क्षमेदशक्तः सर्वस्य शक्तिमान् धर्मकारणात् । अर्थानर्थौ समौ यस्य तस्य नित्यं क्षमा हिता ॥ २२ ॥ योऽर्थतत्त्वमविज्ञाय क्रोध

स्यैव वशं गतः । स तथा तप्यते मूढो ब्राह्मणो नकुलादिव ॥ ४३ ॥ सुखं ह्यवमतः शेते सुखं च प्रतिबुध्यते । सुखं चरति लोके ऽस्मिन्नवमन्ता विनश्यति ॥४४॥ एको धर्मः परं श्रेयः क्षमैका शान्तिरुत्तमा । विद्यैका परमा तृप्तिरहिंसैका सुखावहा ॥४५॥ यश्च नित्यं जितक्रोधो विद्वानुत्तमपुरुषः । क्रोधनस्त्वल्पविज्ञानः प्रेत्य चेह च नश्यति ॥४६॥ ये क्रोधं संनियच्छन्ति क्रुद्धान् संशमयन्ति च । न च कुप्यन्ति भूतानां दुर्गाण्यतितरन्ति ते ॥ ४७ ॥ एकः क्षमावतां दोषो द्वितीयो नोपपद्यते । यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ४८ ॥ सो ऽस्य दोषो न मन्तव्यः क्षमा हि परमं बलम् । शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः॥४९॥ आत्मैव यदि नात्मानमहितेभ्यो निवारयेत् । कोऽन्यो हिततरस्तस्माद्य एनं विनिवारयेत् ॥ ५० ॥

# सत्यम् ४

नास्ति सत्य समो धर्मो न सत्याद्विद्यते परम् । नहि तीव्रतरं किञ्चिदनृतादिह विद्यते ॥१॥ अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् । अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥२॥ सत्यं मृदु प्रियं वाक्यं धीरो हितकरं वदेत् । आत्मोत्कर्षं तथा निन्दां परेषां परिवर्जयेत् ॥ ३ ॥ सत्यमेव व्रतं यस्य दया दीनेषु सर्वदा । कामक्रोधौ वशे यस्य स साधुः कथ्यते बुधैः

॥४॥ सत्येन पूयते साक्षी धर्मः सत्येन वर्द्धते । तस्मात्सत्यं हि वक्तव्यं सर्ववर्णेषु साक्षिभिः ॥५॥ सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव । न पावनतमं किञ्चित्सत्यादध्यगमं क्वचित् ॥६॥ सत्यधर्मं समाश्रित्य यत्कर्म कुरुते नरः । तदेव सकलं कर्म सत्यं जानीहि सुव्रते ॥ ७ ॥ ऋषयश्चैव देवाश्च सत्यमेव हि मेनिरे । सत्यवादी हि लोकेऽस्मिन् परं गच्छति चाक्षयम् ॥८॥ भूमिः कीर्तिर्यशो लक्ष्मीः पुरुषं प्रार्थयन्ति हि । सत्यं समनुवर्तन्ते सत्यमेव भजेत्ततः ॥९॥ वरं कूपशताद्वापी वरं वापीशतात्क्रतुः । वरं क्रतुशतात्पुत्रः सत्यं पुत्रशताद्वरम् ॥१०॥ सत्यवाक्यादिमे सर्वे लौकिका वैदिका अपि । व्यवहाराः प्रवर्तन्ते कालान्तरफलेष्वपि ॥ ११ ॥ अजातशत्रुप्रमुखाः सत्यवाक्यादिवं गताः । न च्यवन्ते ततोऽद्यापि सत्यवाद् परायणाः ॥१२॥ सत्यं वाचनिको धर्मो यथादृष्टार्थवेदनम् । वक्तार्थवत्प्रमाणत्वमिदमुक्तं मनीषिभिः ॥ १३ ॥ ये वदन्तीह सत्यानि प्राणत्यागेऽप्युपस्थिते । प्रमाणभूता भूतानां दुर्गाण्यतितरन्ति ते ॥ १४ ॥ सत्यं वेदेषु जागर्ति फलं सत्ये परं स्मृतम् । सत्याद्धर्मो दमश्चैव सर्वं सत्ये प्रतिष्ठितम् ॥ १५ ॥ न तथ्यवचनं सत्यं नातथ्यवचनं मृषा । यद्भूतहितमत्यन्तं तत्सत्यमिति कथ्यते ॥ १६ ॥ असत्प्रलापं पारुष्यं पैशुन्यमनृतं तथा । चत्वारि वाचा राजेन्द्र न जल्पेन्नानु

चिन्तयेत् ॥ १७ ॥ सत्यहीना वृथा पूजा सत्यहीनो वृथा जपः । सत्यहीनं तपो व्यर्थमूषरे वपनं यथा ॥ १८ ॥ समूल एष शुष्येत् स लोकद्वयफलं विना । अनृतं यो वदे-त्क्वापि पुरुषः परिमोहितः ॥ १९ ॥ ब्रह्मघ्ना ये स्मृता लोका ये च स्त्रीबालघातिनः । मित्रद्रुहः कृतघ्नस्य ते ते स्युर्ब्रुवतो मृषा ॥२०॥ नासत्यवादिनः सख्यं न पुण्यं न यशो भुवि । दृश्यते नापि कल्याणं कालकूटमिवाश्नतः ॥ २१ ॥ मानाद्वा यदि वा लोभात्क्रोधाद्वा यदि वा भयात् । योऽन्यायादन्यथार्थं ब्रूते स नरः पापमाप्नुयात् ॥ २२ ॥ योऽन्यथा सन्तमात्मा-नमन्यथा प्रतिपद्यते । किन्तेन न कृतं पापं चौरेणात्माऽपहा-रिणा ॥ २३ ॥ वाच्यर्था नियताः सर्वे वाङ्मूला वाग्विनिः सृताः । तान्तु यः स्तेनयेद्वाचं स सर्वस्तेयकृन्नरः ॥ २४ ॥ नग्नो मुण्डः कपालेन भिक्षार्थी क्षुत्पिपासितः । अन्धः शत्रुकुलं गच्छेद्यः साक्ष्यमनृतं वदेत् ॥ २५ ॥ अवाक्शिरास्तमस्यन्धे किल्बिषी नरकं व्रजेत् । यः प्रश्नं वितथं ब्रूयात्पृष्टः सन्धर्म-निश्चये ॥२६॥ मन्यते पापकं कृत्वा न कश्चिद्वेत्ति मामिति । विदन्ति चैनं देवाश्च यश्चैवान्तरपूरुषः ॥ २७ ॥ यथार्थकथनं यच्च सर्वलोकसुखप्रदम् । तत्सत्यमिति विज्ञेयमसत्यं तद्विपर्य-यम् ॥२८॥ एकमेवाद्वितीयं यद्राजन्नावबुध्यसे । सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥२९॥ सत्येन रक्ष्यते धर्मो विद्या-

ऽभ्यासेन रक्ष्यते । मृज्यया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥१०॥ गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः । अलुब्धै र्दानशूरैश्च सप्तभिर्धार्यते मही ॥११॥ भीष्मव तु पञ्चान्यानु पुरुषस्योत्तम व्रतम् । न त्वेवैव दयाच सत्य चैव परं वदेत ॥१२॥ सत्यस्य वचनं साधु न सत्याद्विद्यते परम् । सत्येन विधृतं सर्व सर्व सत्ये प्रतिष्ठितम् ॥ १३ ॥ सत्यमेवं परं धर्ममाहुर्धर्मविदो जनाः । दुर्ज्ञेयः शाश्वतो धर्मः स च सत्ये प्रतिष्ठितः ॥१४॥ एकोऽहमस्मीत्यात्मानं यस्त्वं कल्याण मन्यसे । नित्यं स्थितस्ते हृदये पुण्यपापेक्षिता मुनिः ॥ १५ ॥ सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् । अन्तः शरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीण दोषाः ॥ १६ ॥ सत्यमेव जयते नानृतं सत्येन पन्था विततो देवयानः । येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम् ॥१७॥ न सा सभा यत्र न सन्ति वृद्धा वृद्धा न ते ये न वदन्ति धर्मम् । धर्मो न वै यत्र च नास्ति सत्यं सत्यं न तद्यच्छलेनानुविद्धम् ॥१८॥ एकोऽहमस्मीति च मन्यसे त्वं न हृच्छयं वेत्सि मुनिं पुराणम् । यो वेदिता कर्मणः पाप-कस्य तस्यान्तिके त्वं वृजिनं करोषि ॥१९॥ असत्यमप्रत्यय-मूलकारणं कुवासनासद्म समृद्धिवारणम् । विपन्निदानं परव-ञ्चनार्जितं कृतापराधं कृतिभिर्विवर्जितम् ॥४०॥

# वर्णधर्माः ५

ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ १ ॥ ब्राह्मणः केन भवति क्षत्रियो वा द्विजोत्तम। वैश्यः शूद्रश्च विप्रर्षे तद्ब्रूहि वदतांवर ॥२॥ कामः क्रोधो भयं लोभःशोकाश्चिन्ताक्षुधाश्रमः। सर्वेषां नः प्रभवति कस्माद्वर्णो विभज्यते ।३। स्वेदमूत्रपुरीषाणि श्लेष्मा पित्तं सशोणितम्। तनुः क्षरति सर्वेषां कस्माद्वर्णो विभज्यते ॥ ४ ॥ न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत्। ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम् ।५। सत्यं दानमथाद्रोह आनृशंस्यं त्रपा घृणा। तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ॥६॥ येन केनचिदाच्छन्नो येन केनचिदाशितः। यत्र कुत्र च शायी स्यात्तन्देवा ब्राह्मण विदुः ॥ ७ ॥ योऽहेरिव गणाद्भीतः सन्मानान्नरकादिव। कुणपादिवच स्त्रीभ्यस्तन्देवा ब्राह्मणं विदुः ॥ ८ ॥ क्रोधः शत्रुः शरीरस्थो मनुष्याणां द्विजोत्तम। यः क्रोधमोहौ त्यजति तन्देवा० ॥ ९ ॥ यो वदेदिह सत्यानि गुरुं संतोषयेत च। हिंसितश्च न हिंसेत तन्देवा० ॥१०॥ जितेन्द्रियो धर्मपरः स्वाध्यायनिरतः शुचिः। कामक्रोधौ वशौ यस्य तन्देवा० ॥११॥ योऽध्यापयेदधीयीत यजेद्वा याजयीत वा। दद्याद्वाऽपि यथाशक्ति तन्देवा० ॥१२॥

न क्रुध्येन्न प्रहृष्येच्च मानितोऽमानितश्च यः । सर्वभूतेष्वभय-
दस्तं देवा ब्राह्मणं विदुः ॥१३॥ स्वाध्यायेन जपैर्होमैस्त्रैविद्ये-
नेज्यया सुतैः । महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥१४॥
ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते । कृच्छ्राय तपसे
चेह प्रेत्यानन्तसुखाय च ॥१५॥ नानृतं ब्राह्मणो ब्रूयात्
हन्ति प्राणिनं द्विजः । न सेवां कुरुते विप्रो न द्विजः पाप-
कृद्भवेत् ॥१६॥ शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥१७॥ अध्या-
पनमध्ययनं यजनं याजनं तथा । दानं प्रतिग्रहं चैव ब्राह्मणा-
नामकल्पयत् ॥१८॥ त्रीणि कर्माणि जानीत ब्राह्मणानाम्
जीविका । याजनाध्यापने शौचे शुद्धाच्चापि प्रतिग्रहः ॥१९॥
ये शान्तदान्ताः श्रुतिपूर्णकर्णा जितेन्द्रियाः जीवितपे
। प्रतिग्रहे सङ्कुचिताग्रहस्तास्ते ब्राह्मणास्तारयितुं समर्थाः ॥२०॥
धर्मश्च सत्यञ्च तपो दमश्च अमात्सर्यं ह्रीस्तितिक्षाऽनसूया
दानं श्रुतं चैव धृतिः क्षमा च महाव्रता द्वादश
॥२१॥ शूद्रे चैतद्भवेल्लक्ष्यं द्विजे तच्च न विद्यते । न वै
भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥ २२ ॥ कामभोगप्रिया
स्तीक्ष्णाः क्रोधनाः प्रियसाहसाः । त्यक्तस्वधर्मा रक्ताङ्गास्ते
द्विजाः क्षत्रतां गताः ॥२३॥ प्रजानां रक्षणं दानमिज्याऽध्य-
यनमेव च । विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः ॥२

ौर्य तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् । दानमीश्वरभा-
वश्च क्षात्रं कर्म स्वभावजम् ॥२५॥ लोकसंरक्षणे दक्षः शूरो
दान्तः पराक्रमी । दुष्टनिग्रहशीलो यः स वै क्षत्रिय उच्यते
॥२६॥ गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनः ।
स्वधर्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः ॥२७॥ क्रयवि-
क्रयकुशला ये नित्यं पण्यजीविनः । । पशुरक्षाः कृषिकरास्ते
वैश्याः कीर्तिता भुवि ॥२८॥ पशूनां रक्षणं दानमिज्याऽध्य-
नमेव च । वणिक्पथं कुसीदञ्च वैश्यस्य कृषिमेव च ॥२९॥
कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम् । परिचर्यात्मकं कर्म
शूद्रस्यापि स्वभावजम् ॥ ३० ॥ सर्वभक्ष्यरतिर्नित्यं सर्वकर्म-
करोऽशुचिः । त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः
॥३१॥ हिंसाऽनृतप्रिया लुब्धाः सर्वकर्मोपजीविनः । कृष्णाः
शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः ॥३२॥ द्विजसेवाऽर्च-
नरताः शूराः शान्ता जितेन्द्रियाः । सीरकाष्ठतृणवहास्ते
नीचाः शूद्रसंज्ञिताः ॥ ३३ ॥ एकमेव तु शूद्रस्य प्रभुः कर्म
समादिशत् । एतेषामेव वर्णानां शुश्रूषामनसूयया ॥ ३४ ॥
त्यक्तस्वधर्माचरणा निर्घृणाः परपीडकाः । चण्डाश्च हिंसका
नित्यं म्लेच्छास्ते ह्यविवेकिनः ॥ ३५ ॥ ब्राह्मणस्त्वनधीयान-
स्तृणाग्निरिव शाम्यति । तस्मै हव्यं न दातव्यं नहि भस्मनि
हूयते ॥३६॥ श्रुतिस्मृती उभे नेत्रे विप्राणां परिकीर्तिते ।

एकेन विकलः काणो द्वाभ्यामन्धः प्रकीर्तितः ॥ ३७ ॥
ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम् । वैश्यस्य तपो
वार्ता तपः शूद्रस्य सेवनम् ॥ ३८ ॥ न च वेदादृते किञ्चि
च्छास्त्रं धर्माभिधायकम् । योऽन्यत्र रमते सोऽसौ न सम्भाष्यो
द्विजातिभिः ॥३९॥ वेदबाह्यव्रताचाराः श्रौतस्मार्तबहिष्कृताः ।
पाषण्डिन इति ख्याता न सम्भाष्या द्विजातिभिः ॥४०॥
वेदार्थोपनिबन्धृत्वात्प्राधान्यं हि मनोः स्मृतम् । मन्वर्थविपरीता
या सा स्मृतिर्नैव शस्यते ॥४१॥ जातिमात्रेण किं कश्चिद्
न्यते पूज्यते क्वचित् । व्यवहारं परिज्ञाय वध्यः पूज्योऽथवा
भवेत् ॥४२॥ न जात्या ब्राह्मणश्चात्र क्षत्रियो वैश्य एव न ।
न च शूद्रो न वै म्लेच्छो भेदिता गुणकर्मभिः ॥ ४३ ॥
चतुर्वेदोऽपि दुर्वृत्तः स शूद्रादतिरिच्यते । योऽग्निहोत्रपरो
दान्त स ब्राह्मण इति स्मृत ॥४४॥ व्यासासमपि शीलेन
विहीनं नैव पूजयेत् । अपि शूद्रञ्च धर्मज्ञं सद्वृत्तमभिपूजयेत्
॥४५॥ शृणु यक्ष कुलं तात न स्वाध्यायो न च श्रुतम् ।
कारणं हि द्विजत्वे च वृत्तमेव न संशयः ॥४६॥ शूद्रो ब्राह्म
णतामेति ब्राह्मणश्चैति शूद्रताम् । क्षत्रियाज्जातमेवन्तु विद्या
द्वैश्यात्तथैव च ॥४७॥ अव्रतास्त्वनधीयानः अविप्रहरुचिर्द्विजः ।
अम्भस्यश्मप्लवेनेव सह तेनैव मज्जति ॥४८॥ समानाद्ब्राह्मणो
नित्यमुद्विजेत विषादिव । अमृतस्येव चाकांक्षेदवमानस्य

सर्वदा ॥४९॥ तस्मादविद्वान्बिभियाद्यस्मात्तस्मात्प्रतिग्रहात् ।
स्वल्पकेनाप्यविद्वान्हि पङ्के गौरिव सीदति ॥ ५० ॥ यथा
प्लवेनोपलेन निमज्जत्युदके तरन् । तथा निमज्जतोऽधस्तादज्ञौ
दातृप्रतीच्छकौ ॥५१॥ न वार्यपि प्रयच्छेत्तु वैडालव्रतिके
द्विजे । न वकव्रतिके विप्रे नावेदविदि धर्मवित् ॥ ५२ ॥
त्रिष्वप्येतेषु दत्तं हि विधिनाऽप्यर्जितन्धनम् । दातुर्भवत्यन-
र्थाय परत्रादातुरेव च ॥५३॥ धर्मध्वजी सदा लुब्धश्छाद्मिको
लोकदम्भकः । वैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः
॥ ५४ ॥ अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः । शठो
मिथ्याविनीतश्च वकव्रतचरो द्विजः ॥ ५५ ॥ ये वकव्रतिनो
विप्रा ये च मार्जारलिङ्गिनः । ते पतन्त्यन्धतामिस्रे तेन पापेन
कर्मणा ॥५६॥ यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम् ।
यद्यन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत् ॥५७॥ न कुलेन
न जात्या वा क्रियाभिर्ब्राह्मणो भवेत् । चाण्डालोऽपि हि
वृत्तस्थो ब्राह्मणः स युधिष्ठिर ॥ ५८ ॥ गणिका गर्भसंभूतो
वसिष्ठश्च महामुनिः । तपसा ब्राह्मणो जातः संस्कारस्तत्र
कारणम् ॥ ५९ ॥ जातो व्यासस्तु कैवर्त्याः श्वपाक्यास्तु
पराशरः । बहवोऽन्येपि विप्रत्वं प्राप्ता ये पूर्वमद्विजाः ॥६०॥
विश्वामित्रो वासिष्ठश्च मतङ्गो नारदादयः । तपोविशेषैः संप्राप्ता
उत्तमत्वं न जातितः ॥६१॥ यस्तु शूद्रो दमे सत्ये धर्मे च

तपोऽस्थितः । तं ब्राह्मणमहं मन्ये वृत्तेन हि भवेद् द्विजः ॥६२॥ ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः । सोऽप्यथ तथा ब्रह्मवंशस्य कारकः ॥६३॥ विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः । वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः ॥६४॥ अनभ्यासेन वेदानामाचारस्य च वर्जनात् । आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥६५॥ पाषण्डिनो विकर्मस्थान् वैडालव्रतिकान् शठान् । हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥६६॥ क्रियाहीनश्च मूर्खश्च सर्वधर्मविवर्जितः । निर्दयः सर्वभूतेषु विप्रश्चाण्डाल उच्यते ॥६७॥ श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् । स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ६८ ॥ पश्य लक्ष्मण पम्पायां बकः परमधार्मिकः । शनैः शनैः पदं धत्ते प्राणिनां वधशङ्कया ॥ ६९ ॥ बकः किं श्लाघ्यते राम येनाहं निष्कुलीकृता । सहवासी विजानाति चरित्रं सहवासिनः ॥७०॥

## सन्ध्योपासना ६

सन्ध्यामुपासते ये तु सततं संशितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥ १ ॥ ब्रह्मणोपासिता सन्ध्या विष्णुना शङ्करेण च । नोपास्ते कथं तां देवीं सिद्धिकामो

द्विजोत्तमः ॥२॥ अहोरात्रस्य यः सन्धिः सूर्यनक्षत्रवर्जितः । सा च सन्ध्या समाख्याता मुनिभिस्तत्त्ववादिभिः ॥ ३ ॥ जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् । सन्ध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ॥४॥ सन्ध्या येन न विज्ञाता सन्ध्या येनानुपासिता । स शूद्रवद्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥५॥ सन्ध्याहीनस्तु यो विप्रो ह्यन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥६॥ तस्मान्नित्यं प्रकर्तव्यं सन्ध्योपासनमुत्तमम् । तदभावेऽन्यकर्मादावाधिकारो भवेन्नहि ॥७॥ नानुतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम् । स साधुभिर्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥८॥ तस्मात्सर्वप्रयत्नेन सन्ध्योपासां चरेद् द्विजः । अन्यथा शूद्रवद्भूयात्सर्वकार्येषु निन्दितः ॥९॥ तस्मान्न लङ्घयेत्सन्ध्यां सायं प्रातः समाहितः । उल्लङ्घयति यो मोहात्स याति नरकं ध्रुवम् ॥१०॥ कौसल्या सुप्रजा राम पूर्वा सन्ध्या प्रवर्त्तते । उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम् ॥११॥ तस्यर्षेः परमोदारं वचः श्रुत्वा नरोत्तमौ । स्नात्वा कृतोदकौ वीरौ जेपतुः परमं जपम् ॥१२॥ उभे सन्ध्ये शयानस्य यत्पापं परिकल्प्यते । तच्च पापं भवेत्तस्य यत्पार्योऽनुमते गतः ॥ १३ ॥ ऋषेर्वचनमाज्ञाय रामः सन्ध्यामुपासितुम् । अपाक्रमत्सरः पुण्यमप्सरोगणसेवितम् ॥ १४ ॥ तत्रोदकमुपस्पृश्य सन्ध्यामन्वास्य पश्चि-

माम् । आश्रमं प्राविशद्रामः कुम्भयोनेर्महात्मनः ॥१५॥ सन्ध्या कालमना श्यामा ध्रुवमेष्यति जानकी । नदीमेमां शुभजलां सन्ध्यार्थे वरवर्णिनी ॥ १६ ॥ यदि जीवति सा देवी तारा-धिपनिभानना । आगमिष्यति साऽवश्यमिमां शीतजलां नदीम् ॥ १७ ॥ अभ्यसेत तथा पुण्यां गायत्रीं वेदमातरम् । गत्वाऽरण्ये नदीतीरे सर्वपापविशुद्धये ॥ १८ ॥ ये न पूर्वा मुपासन्ते द्विजाः सन्ध्यां न पश्चिमाम् । सर्वांस्तान्धार्मिको राजा शूद्रकर्माणि कारयेत् ॥ १९ ॥ ऋषयो दीर्घसन्ध्या त्वादीर्घमायुरवाप्नुयुः । प्रज्ञां यशश्च कीर्तिंच ब्रह्मवर्चस मेव च ॥ २० ॥

## अतिथि-सत्कार ७

संप्राप्ताय त्वतिथये प्रदद्यादासनोदके । अन्नं चैव यथा शक्ति सत्कृत्य विधिपूर्वकम् ॥ १ ॥ न वै स्वयं तदश्नीया दतिथिं यन्न भोजयेत् । धन्यं यशस्यमायुष्यं स्वर्ग्यं वा तिथिभोजनम् ॥२॥ अतिथिं तत्र संप्राप्तं पूजयेत्स्वागतादिना । तथाऽऽसनप्रदानेन पादप्रक्षालनेन च ॥ ३ ॥ श्रद्धया चान्नदानेन प्रियप्रश्नोत्तरेण च । गच्छतश्चानुयानेन प्रीति मुत्पादयेद्‌गृही ॥ ४ ॥ अपूजितोऽतिथिर्यस्य यस्य गृहाद्याति निराशया । प्रतिघातो भवेत् ... समादिशः । स वै प्राप्नुयान्नरो लोकान् मयष्क्वेयाः समादितः । स वै प्रसविदो लोकान् माप्नुयाद्भरतर्षभ

॥ ५ ॥ श्रान्तमध्वनि वर्तन्तं वृद्धमर्हमुपस्थितम् । अर्चयद्गूति-मन्विच्छन् गृहस्थो गृहमागतम् ॥ ६ ॥ अप्रणोद्योऽतिथिः सायं सूर्योढो गृहमेधिना । काले प्राप्तस्त्वकाले वा नास्यानश्नन् गृहे वसेत् ॥ ७ ॥ न यज्ञैर्दक्षिणावद्भिर्वह्निशुश्रूषया तथा । गृही स्वर्गमवाप्नोति यथा चातिथिपूजनात् ॥ ८ ॥ यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्तते । श्रान्तायादृष्टपूर्वाय तस्य पुण्यफलं महत् ॥ ९ ॥ नावमन्येदभिगतं न प्रणुद्यात्कथञ्चन । अपि श्वपाके शुनि वा न दानं विप्रणश्यति ॥ १० ॥ तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता । एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥ ११ ॥ यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ । तयोरन्नमदत्त्वा च भुक्त्वा चान्द्रायणं चरेत् ॥ १२ ॥ आसनावसथौ शय्यामनुव्रज्यामुपासनाम् । उत्तमेषूत्तमं कुर्याद्धीने हीनं समे समम् ॥ १३ ॥ योऽर्चितं प्रतिगृह्णाति ददात्यर्चितमेव च । तावुभौ गच्छतः स्वर्गं नरकं तु विपर्यये ॥ १४ ॥ काष्ठभारसहस्रेण घृतकुम्भशतेन च । अतिथिर्यस्य भग्नाशस्तस्य होमो निरर्थकः ॥ १५ ॥ अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते । स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥ १६ ॥ अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् । यज्ञशिष्टाशनं ह्येतत्सतामन्नं विधीयते ॥ १७ ॥ यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।

मुमते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १८ ॥ उपासते य गृहस्था' परपाकमबुद्धयः । तेन ते मेत्य पशुतां व्रजन्त्य न्नादिदायिनाम् ॥ १९ ॥ मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य । नार्यमणं पुष्यति नो सखायं केव लाघो भवति केवलादी ॥ २० ॥

# ब्रह्मचर्यम् ८

ब्रह्मचर्येण तपसा राजा राष्ट्रं विरक्षति । आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते ॥ १ ॥ ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत । इन्द्रो ह ब्रह्मचर्येण देवेभ्यः स्वराभरत ॥ २ ॥ धर्म्यं यशस्यमायुष्यं लोकद्वयरसायनम् । अनुमोदा-महे ब्रह्मचर्यमेकान्तनिर्मलम् ॥ ३ ॥ ब्रह्मचर्यं परं शौर्यं ब्रह्मचर्यं परन्तपः । ये स्थिता ब्रह्मचर्येण ब्राह्मणास्ते दिवं गता ॥४॥ समुद्रतरणे यद्वदुपायो नौः प्रकीर्तिता । संसार तरणे तद्वद्ब्रह्मचर्यं प्रकीर्तितम् ॥५॥ नीरोगः कान्तिसम्पन्नः सर्वदुःखविवर्जितः । ब्रह्मचारी भवेल्लोके पाप्मना च विवर्जित' ॥ ६ ॥ किं बहुक्तेन लोकेऽस्मिन्साधनं यदि विद्यते । ब्रह्म चर्ये तु तत्सर्वमन्तर्भवति सर्वथा ॥ ७ ॥ यथा गजपदे सर्वे पादा अन्तर्भवन्ति हि । नैतस्मादधिकं किञ्चिद् ब्रह्मचर्यादि विद्यते ॥ ८ ॥ सर्वसाधनसम्पन्ना ब्रह्मचर्यविवर्जिताः । केचा हि मुनयो भेजुर्भिद्रास्ते ऽपि च कोटिशः ॥ ९ ॥ कर्मणा

मनसा वाचा सर्वावस्थासु सर्वदा । सर्वत्र मैथुनत्यागो ब्रह्मचर्यं प्रचक्षते ॥ १० ॥ आजन्ममरणाद्यस्तु ब्रह्मचारी भवेदिह । न तस्य किञ्चिदप्राप्यमिति विद्धि नराधिप ॥ ११ ॥ ये तपश्च तपस्यन्ति कौमारा ब्रह्मचारिणः । विद्यावेदव्रतस्नाता दुर्गाण्यतितरन्ति ते ॥ १२ ॥ सुखं दान्तः प्रस्वपिति सुखं च प्रतिबुध्यते । सुखं पर्य्येति लोकांश्च मनश्चास्य प्रसीदति ॥ १३ ॥ अदान्तः पुरुषः क्लेशमभीक्ष्णं प्रतिपद्यते । अनर्थांश्च बहूनन्यान् प्रसृजत्यात्मदोषजान् ॥ १४ ॥ इन्द्रियाणां विचरतां विषयेष्वपहारिषु । संयमे यत्नमातिष्ठेद्विद्वान् यन्तेव वाजिनाम् ॥ १५ ॥ आपदां कथितः पन्था इन्द्रियाणामसंयमः । तज्जयः सम्पदां मार्गो येनेष्टं तेन गम्यताम् ॥ १६ ॥ धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः । श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ॥ १७ ॥ जिह्वयाऽतिप्रमाथिन्या जनो रसविमोहितः । मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तु बडिशैर्यथा ॥ १८ ॥ तावज्जितेन्द्रियो न स्याद्विजितान्येन्द्रियः पुमान् । न जयेद्रसनं यावज्जितं सर्वं जिते रसे ॥ १९ ॥ आस्वाद्यस्य हि सर्वस्य जिह्वाऽग्रेक्षणसङ्गमः । कण्ठनाडीमतीतं च सर्वं चैवाशनं समम् ॥ २० ॥ एकः शयीत सर्वत्र न रेतः स्कन्दयेत् क्वचित् । कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रतमात्मनः ॥२१॥ आयु-

स्तेभ्यो परं वीर्यं ब्रह्म भीष्म महायशः । पुण्यश्च प्रीतिमत्त्व च इन्यतेऽब्रह्मचर्यया ॥२२॥ ब्रह्मचर्य परो धर्मः स चापि नियतस्त्वयि । यस्माद्यस्मादहं पार्थ रणेऽस्मिन्निनिवतस्त्वया ॥२३॥ यो गृहाश्रममास्थाय ब्रह्मचारी भवेत्पुनः । न पार्विनं मनस्यत्र सर्वाश्रमविवर्जितः ॥ २४ ॥ आहारशयनब्रह्मचर्यै र्युक्त्या प्रयोजितैः । शरीरं धार्यते नित्यमागारमिव धारणैः ॥२५॥ इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम् । तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम् ॥२६॥ यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः । इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥२७॥ वशे कृत्वेन्द्रियग्रामं संयम्य च मनस्तथा । सर्वान् संसाधयेदर्थानक्षिण्वन्योगतस्तनुम् ॥ २८ ॥ इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् । संनियम्य तु तान्येव ततः सिद्धिं नियच्छति ॥२९॥ इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च । अहिंसया च भूतानाममृतत्वाय कल्पते ॥ ३० ॥ मरणं बिन्दुपातेन जीवनं बिन्दुधारणात् । तस्माद्यतिः प्रयत्नेन कुरुते बिन्दुधारणम् ॥ ३१ ॥ यावद्बिन्दुः स्थितो देहे तावन्मृत्योर्भयं कुतः । एवं संरक्षयेद्बिन्दुं मृत्युं जयति योगवित् ॥ ३२ ॥ शुक्रं तस्माद्विशेषेण रक्षमारोग्यमिच्छति । धर्मार्थकाममोक्षा णामारोग्यं मूलकारणम् ॥३३॥ चित्तायत्तं नृणां शुक्रं शुक्रा यत्तञ्च जीवितम् । तस्माच्छुक्रं मनश्चैव रक्षणीयं प्रयत्नत

॥ ३४ ॥ आहारशयनब्रह्मचर्यैर्युक्त्या प्रयोजितैः । शरीरं धार्यते नित्यमागारमिव धारणैः ॥ ३५ ॥ वैखानसा वालखिल्यास्तथा चान्ये तपोधनाः । रसायनमिदं प्राप्य बभूवुरमितायुषः ॥३६॥ दमस्तेजो वर्धयाति पवित्रं दम उत्तमम् । विपाप्मा वृद्धतेजास्तु पुरुषो विन्दते महत् ॥३७॥ दमः पवित्रं परमं मङ्गल्यं परमं दमः । दमेन सर्वमाप्नोति यत्किञ्चिन्मनसेच्छति ॥ ३८ ॥ शिष्यवृत्तिक्रमेणैव विद्यामाप्नोति यः शुचिः । ब्रह्मचर्यव्रतस्यास्य प्रथमः पाद उच्यत ॥ ३९ ॥ विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणा यान्ति नाविद्वा ँ सस्तपस्विनः ॥४०॥

# स्वाध्यायः ९

मिमीहि श्लोकमास्ये पर्जन्य इव ततनः । गाय गायत्रमुक्थ्यम् ॥ १ ॥ पाहि नो अग्न एकया पाह्यु३त द्वितीयया । पाहि गीर्भिस्तिसृभिरूर्जाम्पते पाहि चतसृभिर्वसो ॥२॥ वेदमेवाभ्यसेन्नित्यं यथाकालमतन्द्रितः । तं ह्यस्याहुः पर धर्ममुपधर्मोऽन्य उच्यते ॥ ३ ॥ वेदमेव सदाऽभ्यस्येत्तपस्तप्स्यन्द्विजोत्तमः । वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥४॥ धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः । ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥५॥ यथोक्तान्यपि कर्माणि परिहाय

द्विजोत्तमः । आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान्
॥ ६ ॥ संन्यसेत्सर्वकर्माणि वेदमेकं न संन्यसेत् । वेदसंन्या-
सतः शूद्रस्तस्माद्वेदं न संन्यसेत् ॥ ७ ॥ यज्ञानां तपसाञ्चैव
शुभानाञ्चैव कर्मणाम् । वेद एव द्विजातीनां निःश्रेयसकरः
परः ॥ ८ ॥ बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम् ।
तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम् ॥ ९ ॥ चातुर्वर्ण्यं
त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् । भूतं भव्यं भविष्यच्च सर्वं
वेदात्प्रसिध्यति ॥ १० ॥ वेदाभ्यासो ब्राह्मणस्य क्षत्रियस्य
च रक्षणम् । वार्त्ता कर्मैव वैश्यस्य विशिष्टानि स्वकर्मसु ॥ ११ ॥
वेदाभ्यासस्तपो ज्ञानं शौचमिन्द्रियनिग्रहः । धर्मक्रियात्म-
चिन्ता च सात्त्विकं गुणलक्षणम् ॥ १२ ॥ अनुद्वेगकरं वाक्यं
सत्यं प्रियहितञ्च यत् । स्वाध्यायाभ्यसनञ्चैव वाङ्मयन्तप
उच्यते ॥ १३ ॥ वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रिया
क्षमा । नाशयन्त्याशु पापानि महापातकजान्यपि ॥ १४ ॥
अधीत्य यत्किञ्चिदपि वेदार्थाभिमये रतः । स्वर्गलोकमवाप्नोति
धर्मानुष्ठानविद्द्विजः ॥ १५ ॥ वेदशास्त्रार्थतत्त्वज्ञो यत्र
तत्राश्रमे वसन् । इहैव लोके तिष्ठन्स ब्रह्मभूयाय कल्पते
॥ १६ ॥ यथा जातबलो वह्निर्दहत्यार्द्रानपि द्रुमान् । तथा
दहति वेदज्ञः कर्मजं दोषमात्मनः ॥ १७ ॥ स्वाध्याये नित्य
युक्तः स्याद्दान्तो मैत्रः समाहितः । दाता नित्यमनादाता

सर्वभूतानुकम्पकः ॥१८॥ यः स्वाध्यायमधीतेऽब्दं विधिना नियतः शुचिः। तस्य नित्यं क्षरत्येष पयोदधि घृतं मधु॥१९॥ वेदोपकरणे चैव स्वाध्याये चैव नैत्यके। नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥ २० ॥ स्वाध्यायाद्योगमातिष्ठेद्योगात्स्वाध्यायमानयेत् । स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते ॥ २१ ॥ एकोऽपि वेदविद्धर्मं यं व्यवस्येद् द्विजोत्तमः। स विज्ञेयः परो धर्मो नाज्ञानामुदितोऽयुतैः ॥२२॥ अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥ २३ ॥ सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते । वार्यन्नगोमहीवासस्तिलकाञ्चनसर्पिषाम् ॥२४॥ सर्वान्परित्यजेदर्थान् स्वाध्यायस्य विरोधिनः। यथा तथाऽध्यापयंस्तु सा ह्यस्य कृतकृत्यता ॥ २५ ॥ यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः। यश्च विप्रो ऽनधीयानस्त्रयस्ते नाम बिभ्रति ॥ २६ ॥ योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥२७॥ यथा षण्ढोऽफलः स्त्रीषु यथा गौर्गवि चाफला। यथा चाज्ञे ऽफलं दानं तथा विप्रो ऽनृचो ऽफलः ॥ २८ ॥ गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम् । नापात्रे विदुषा किञ्चिदात्मनः श्रेय इच्छता ॥२९॥ यथेरिणे बीजमुप्त्वा न वप्ता लभते फलम्। तथाऽनृचे हविर्दत्त्वा न दाता लभते फलम्॥३०॥

# दान-धर्म १०

यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि । तवेत्तत्सत्यमङ्गिरः
॥१॥ दानतो वैरिणोऽपि स्युर्मित्राण्येव न संशयः । दाने सर्व-
मिदं विश्वं प्रतितिष्ठति सर्वदा ॥ २ ॥ प्रशंसन्ति प्रजा नित्यं
कर्णबल्यादिकानिह । वदान्या दानतः स्वर्गं व्रजन्ति सततं
नराः ॥३॥ यशः सम्पूर्णतां यान्ति दानतो दक्षिणात्मनः ।
दातारं सर्वभूतानि भजन्ति पितरं यथा ॥४॥ दानेन प्राप्यते
स्वर्गो दानेन सुखमश्नुते । इहामुत्र च दानेन पूज्यो भवति
मानवः ॥५॥ दानेन भूतानि वशीभवन्ति दानेन वैराण्यपि
यान्ति नाशम् । परोऽपि बन्धुत्वमुपैति दानैर्दानं हि सर्वव्य-
सनानि हन्ति ॥६॥ न दानतः किञ्चिदिहान्यदस्ति जनस्य
दुःखक्षतये निमित्तम् । संवर्धनीयं सततं प्रयत्नान्निरन्तरं
मित्रमिवोपकारि ॥ ७ ॥ गौरवं प्राप्यते दानान्न तु वित्तस्य
सञ्चयात् । स्थितिरुच्चैः पयोदानां पयोधीनामधः स्थितिः॥८॥
यद्ददाति यदश्नाति तदेव धनिनो धनम् । अन्ये मृतस्य क्रीडन्ति
दारैरपि धनैरपि ॥९॥ यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने
दिने । तत्ते वित्तमहं मन्ये शेषमन्यस्य रक्षसि ॥१०॥ भवन्ति
नरकाः पापात्पापं दारिद्र्यसंभवम् । दारिद्र्यमप्रदानेन तस्मा
द्दानपरो भवेत् ॥११॥ ग्रासादपि तदर्धं च कस्मान्नो दीयते-

ऽर्थिषु । इच्छाऽनुरूपो विभवः कदा कस्य भविष्याति ॥१२॥ अनुकूले विधौ देयं यतः पूरयिता हरिः । प्रतिकूले विधौ देय यतः सर्वं हरिष्यति ॥ १३ ॥ उपार्जितानां वित्तानां त्याग एवं हि रक्षणम् । तदागोदरसंस्थानां परावाह इवाम्भसाम् ॥१४॥ आयासशतलब्धस्य प्राणभ्योऽपि गरीयसः । गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥१५॥ दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य । यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ १६ ॥ यो न ददाति न भुङ्क्ते सति विभवे नैव तस्य तद्द्रव्यम् । तृणमयकृत्रिमपुरुषो रक्षति सस्यं परस्यार्थे ॥१७॥ दातव्यं भोक्तव्यं सति विभवे संग्रहो न कर्तव्यः । पश्यामि मधुकरीणां संचितमर्थं हरन्त्यन्ये ॥१८॥ विद्यायां दुर्मदो येषां कार्पण्यं विभवे सति । तेषां दैवाभिशप्तानां सलिलादग्निरुत्थितः ॥ १९ ॥ यस्य दानविहीनस्य धनान्यायान्ति यान्ति किम् । आरण्यकुसुमानीव निरर्थास्तस्य सम्पदः ॥ २० ॥ द्वाविमौ पुरुषौ राजन् स्वर्गस्योपरि तिष्ठतः । प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥२१॥ द्वावम्भसि निवेष्टव्यौ गले वध्वा दृढां शिलाम् । धनवन्तमदातारं दरिद्रञ्चातपस्विनम ॥ २२ ॥ मित भुङ्क्ते संविभज्याश्रितेभ्यो मितं स्वापित्यमितं कर्म कृत्वा । ददात्यमित्रेष्वपि याचितः संस्तमात्मवन्तं प्रजहत्यनर्थाः ॥ २३ ॥

त्यागो गुणो गुणशतादधिको मतो मे विद्या विभूषयति तं यदि किं ब्रवीमि। शौर्यं हि नाम यदि तत्र नमोऽस्तु तस्मै तच्च भयं न च मदोऽस्ति विमत्सरमेतत् ॥२४॥ अष्टौ गुणाः पुरुषं दीपयन्ति प्रज्ञा च कौल्यञ्च दमः श्रुतञ्च। पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च ॥ २५ ॥ दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमाऽन्वितं शौर्यम्। वित्तं दानसमेतं दुर्लभमेतच्चतुर्भद्रम् ॥२६॥ अर्थाः पादरजःसमा गिरिनदीवेगोपमं यौवनं आयुष्यं जलबिन्दुलोलचपलं फेनोपमं जीवनम्। दानं यो न करोति निश्चलमतिर्भोगं न भुङ्क्ते च यः पश्चात्तापयुतो जरापरिगतः शोकाग्निना दह्यते ॥ २७ ॥ विप्रेभ्यः साधु दानं रिपुजनसुहृदामोपकारान्कुरु त्वं सौजन्यं बन्धुवर्गे निजहितमुचितं स्वामिकार्यं यथार्थम्। श्रोत्रे ते तथ्यमेतत्कथयति सततं लेखनी भाग्यशालिन् नो चेत्कष्टेऽपि काले मम मुखसदृशं तावकास्यं भवेद्धि ॥ २८ ॥ पात्रे दानं स्वल्पमपि काले दत्तं युधिष्ठिर। मनसा हि विशुद्धेन प्रेत्यानन्तफलं स्मृतम् ॥ २९ ॥ अपात्रेभ्यस्तु दत्तानि दानानि सुबहून्यपि। वृथा भवन्ति राजेन्द्र भस्मन्याज्याहुतिर्यथा ॥३०॥ पात्रापात्रविवेकोऽस्ति धेनुपन्नगयोर्यथा। तृणात्संजायते क्षीरं क्षीरात्संजायते विषम् ॥३१॥ पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम्। केवलं त्यागबुद्ध्या यत् धर्मदानं

तदुच्यते ॥३२॥ सुक्षेत्रे वापयेद्बीजं सुपात्रे निक्षिपेद्धनम् । सुक्षेत्रे च सुपात्रे च ह्युप्तं दत्तं न नश्यति ॥३३॥ न विद्यया केवलया तपसा वापि पात्रता । यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥३४॥ दातव्यमितियद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥३५॥ हिरण्यदानं गोदानं पृथिवीदानमेव च । एतानि वै पवित्राणि तारयन्त्यपि दुष्कृतम् ॥३६॥ एतानि पुरुषव्याघ्र साधुभ्यो देहि नित्यदा । दानानीह परं पापान्मोक्षयन्ति न संशयः ॥३७॥ यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे । तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥३८॥ प्रियाणि लभते नित्यं प्रियदः प्रियकृत्तथा । प्रियो भवति भूतानामिह चैव परत्र च ॥३९॥ अमित्रमपि चेद्दीनं शरणैषिणमागतम् । व्यसने योऽनुगृह्णाति स वै पुरुषसत्तमः ॥४०॥ ईश्वरा भूरिदानेन यल्लभन्ते फलं किल । दरिद्रस्तच्च काकिण्या प्राप्नुयादिति नः श्रुतम् ॥४१॥ न्यायार्जितधनश्चापि विधिवद्यत्प्रदीयते । अर्थिभ्यः श्रद्धया युक्तं दानमेतदुदाहृतम् ॥४२॥ अपहृत्य परस्यार्थान्यः परेभ्यः प्रयच्छति । स दाता नरकं याति यस्यार्थास्तस्य तत्फलम् ॥४३॥ सार्थः प्रवसतो मित्रं भार्या मित्रं गृहे सतः । आतुरस्य भिषङ्मित्रं दानं मित्रं मरिष्यतः ॥ ४४ ॥ अभिगम्योत्तमं दानमाहूतश्चैव मध्यमम् । अधमं याच्यमानं स्यात्सेवादा-

नन्तु निष्फलम् ॥ ४० ॥ चत्वारो धनदायादा धर्माग्निनृपत स्कराः । तेषां ज्येष्ठावमानेन त्रयः कुप्यन्ति बान्धवाः ॥४६॥ विद्यमाने धने लोभाद्दानभोगविवर्जितः । पश्चान्नास्तीति यो ब्रूयात्सोऽक्षयं नरकं व्रजेत् ॥४८॥ स्थिरो मृत्युमुखे चाहं क्षणमायुर्ममास्ति न । इति मत्वा दानधर्मौ यथेष्टौ तु समाचरेत् ॥४८॥ येन केन प्रकारेण यस्य कस्यापि देहिनः । संतोषं जनयेत् प्राज्ञस्तदेवेश्वरपूजनम् ॥४९॥ दानं वाचस्तथा बुद्धेर्वित्तस्य विविधस्य च । शरीरस्य च कुत्रापि केचिदिच्छन्ति पण्डिताः ॥५०॥ न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ । अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥५१॥ गोदुग्धं वाटिकापुष्पं विद्या कूपोदकं धनम् । दानाद्विवर्धते नित्यमदानाच्च विनश्यति ॥५२॥ पानीयं परमं दानं दानानां मनुरब्रवीत् । तस्मात्कूपांश्च वापीश्च तडागानि च खानयेत् ॥५३॥ जलाशयाश्च वृक्षाश्च विश्रामगृहमध्वनि । सेतुः प्रतिष्ठितो येन तेन सर्वं वशीकृतम् ॥ ५४ ॥ वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः । तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥ ५५ ॥ भूमिदो भूमिमाप्नोति दीर्घमायुर्हिरण्यदः । गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूप्यमुत्तमम् ॥ ५६ ॥ देयं भेषजमार्तस्य परिश्रान्तस्य चासनम् । तृषितस्य च पानीयं क्षुधितस्य च भोजनम् ॥५७॥ अभ्यञ्जनं तैलञ्च मीणनं

वर्द्धते सदा । अन्नदानमतो हेतोः श्रेष्ठमाह प्रजापतिः ॥५८॥ यस्मादन्नात्प्रजाः सर्वाः कल्पे कल्पेऽसृजत्प्रभुः । तस्मादन्नात्परन्दानं न भूतं न भविष्यति ॥५९॥ अन्नदानं परन्दानं विद्यादानमतः परम् । अन्नेन क्षणिका तृप्तिर्यावज्जीवन्तु विद्यया ॥६०॥

# स्त्रीधर्माः ११

सा भार्या या गृहे दक्षा सा भार्या या प्रजावती । सा भार्या या पतिप्राणा सा भार्या या पतिव्रता ॥ १ ॥ भर्ता हि परमं नार्या भूषणं भूषणैर्विना । एषा विरहिता तेन शोभमाना न शोभते ॥ २ ॥ श्वश्रूश्वशुरयोः पादौ जोषन्ती सुगुणान्विता । मातापितृपरा नित्यं या नारी सा तपोधना ॥३॥ नेक्षेत्पतिं क्रूरदृष्ट्या श्रावयेन्नैव दुर्वचः । नाप्रियं मनसा वाऽपि चरेत्पत्युः पतिव्रता ॥४॥ सुस्वभावा सुवचना सुव्रता सुखदर्शना । अनन्यचित्ता सुमुखी भर्तुः सा धर्मचारिणी॥५॥ मितं ददाति हि पिता मितं भ्राता मितं सुतः । अमितस्य प्रदातारं भर्तारं का न पूजयेत् ॥ ६ ॥ नास्ति भर्तृसमो नाथो नास्ति भर्तृसमं सुखम् । विसृज्य धनसर्वस्वं भर्ता वै शरणं स्त्रियः ॥ ७ ॥ छायेवानुगता स्वच्छा सखीव हित कर्मसु । दासीवादिष्टकार्येषु भार्या भर्तुः सदा भवेत् ॥ ८ ॥

सदा प्रहृष्टया भाव्यं गृहकार्येषु दक्षया । सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥ ९ ॥ नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् । पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥ १० ॥ नास्ति यज्ञः स्त्रियः किञ्चिन्न व्रतं नोपवासकम् । या हि भर्तुश्च शुश्रूषा तया स्वर्गं जयत्यसौ ॥ ११ ॥ मण्डनं वर्जयेत्तस्य तथा प्रोषितभर्तृका । धारयेन्मङ्गलार्थानि किञ्चिदाभरणानि च । देवताराधनपरा तिष्ठेद्भर्तृहिते रता ॥ १२ ॥ कार्येषु मन्त्री करणेषु दासी भोज्येषु माता शयनेषु रम्भा । धर्मानुकूला क्षमया धरित्री षाड्गुण्यमेतद्धि पतिव्रतानाम् ॥ १३॥ पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् । स्वप्नमन्यगृहे वासो नारीणां दूषणानि षट् ॥ १४॥ पत्यौ जीवति या योषिदुपवासव्रतं चरेत् । आयुः सा हरते भर्तुर्नरकं चैव गच्छति ॥ १५ ॥ नित्यं स्नाता सुगन्धा च नित्यं च प्रियवादिनी । अल्पभुक्मितवक्त्री च देवता सा न मानुषी ॥ १६ ॥ यस्य भार्या शुचिर्दक्षा भर्तारमनुगामिनी । नित्यं मधुरवक्त्री च सा रमा न रमा रमा ॥ १७ ॥ उत्पादनमपत्यस्य जातस्य परिपालनम् । प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम् ॥ १८॥ काममामरणात्तिष्ठेद् गृहे कन्यर्तुमत्यपि । न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥ १९ ॥ पतिशुश्रूषणाद्भार्यास्तपो नान्यद्विधीयते । सावित्री पतिशुश्रूषां कृत्वा स्वर्गे महीयते

॥२०॥ इमं धर्मपथं नारी पालयन्ती समाहिता । अरुन्धतीव नारीणां स्वर्गे लोके महीयते ॥ २१ ॥ वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः । आत्मानमात्मना सत्यो जितः स्वर्गो न संशयः ॥२२॥ कार्यार्थे निर्गतश्चापि भर्तारं गृहमागतम् । आसनेनोपसंयोज्य पूजयेत्सुसमाहिता ॥ २३ ॥ यदन्नं नाभि-जानाति यद्भोज्यं नाभिनन्दति । भक्ष्यं वा यदि वा लेह्यं तत्सर्वं वर्जयेत्सती ॥ २४ ॥ नोत्थापयति भर्तारं सुप्तसुप्तमियं सदा । अन्तरेष्वपि कार्येषु तेन तुष्यति तन्मनः ॥ २५ ॥ श्रुत्वा स्वरं द्वारगतस्य भर्तुः प्रत्युत्थिता तिष्ठ गृहस्य मध्ये । दृष्ट्वा प्रविष्टं त्वरिताऽऽसनेन पाद्येन चैनं प्रतिपूजयस्व ॥२६॥ महाकुलीनाभिरपापिकाभिः स्त्रीभिः सतीभिस्तव सख्यमस्तु । चण्डाश्चशौण्डाश्चमहाशनाश्चचौराश्चदुष्टाश्चपलाश्चवर्ज्याः ।२७। दह्यमाना मनो दुःखैर्व्याधिभिश्चातुरा नराः । ह्लादन्ते स्वेषु दारेषु घर्मार्ताः सलिलेष्विव ॥ २८ ॥ आत्मनो जन्मनः क्षेत्रं पुण्यं रामाः सनातनम् । ऋषीणामपि का शक्तिः स्रष्टुं रामा-मृते प्रजाम् ॥ २९ ॥ न च भार्यासमं किञ्चिद्विद्यते भिषजां मतम् । औषधं सर्वदुःखेषु सत्यमेतद्ब्रवीमि ते ॥३०॥ नास्ति भार्यासमो बन्धुर्नास्ति भार्यासमा गतिः । नास्ति भार्यासमो लोके सहायो धर्मसंग्रहे ॥३१॥ अर्द्धं भार्या मनुष्यस्य भार्या श्रेष्ठतमः सखा । असहायस्य लोकेऽस्मिन् लोकयात्रासहा-

पिनी ॥ ३२ ॥ कान्तारेष्वपि विश्रामो जनस्य गृहिणी मता । यः सदारः स विश्वास्यस्तस्माद्दाराः परा गतिः ॥३३॥ अनुकूलां विमलाङ्गीं कुलीनां कुशलां सुशीलसम्पन्नाम् । एतादृशीं सुभार्यां पुरुषः पुण्योदयाल्लभते ॥३४॥ अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् । शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्य चेक्षणे ॥ ३५ ॥ यादृशं भजते हि स्त्री सुतं सूते तथाविधम् । तस्मात्प्रजाविशुद्ध्यर्थं स्त्रियं रक्षेत्प्रयत्नतः ॥ ३६ ॥ उत्सवे लोकयात्रायां तीर्थेष्वन्यनिकेतने । न पत्नीं प्रेषयेत्स्मार्तः पुत्रामात्यविवर्जिताम् ॥ ३७ ॥ पुरा कल्पे कुमारीणां मौञ्जीबन्धनमिष्यते । अध्यापनं च वेदानां सावित्रीवचनं तथा ॥३८॥ साऽद्य तस्मिन्कुले जाता महर्षिसवि शिष्टे । विनीता मोक्षधर्मेषु चराम्येका मुनिव्रतम् ॥ ३९ ॥ शाश्वतोऽयं धर्मपथः सद्भिराचरितः सदा । यद्भार्याः परिरक्षन्ति भर्तारो निर्बला अपि ॥ ४० ॥ पूजनीया महाभागाः पुण्याश्च गृहदीप्तयः । स्त्रियः श्रियो गृहस्योक्तास्तस्माद्रक्ष्या विशेषतः ॥ ४१ ॥ पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा । पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥ ४२ ॥ शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलम् । न शोचन्ति तु यत्रैता वर्धते तद्धि सर्वदा ॥ ४३ ॥ तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः । भूतिकामैर्नरैर्नित्यं सत्कारेषू-

न भक्षयति यो मांसं न च हन्यान्न घातयेत् । तन्मित्रं सर्वभूतानां मनुःस्वायम्भुवोऽब्रवीत् ॥६॥ नहि मांसं तृणात्काष्ठादुपलाद्वाऽपि जायते । हत्वा जन्तुं ततो मांसं तस्माद्दोषस्तु भक्षणे ॥७॥ यदि चेत्खादको न स्यान्न तदा घातको भवेत् । घातकः खादकार्थाय तद्घातयति वै नरः ॥ ८ ॥ धनेन क्रयिको हन्ति खादकश्चोपभोगतः । घातको वधबन्धाभ्यामित्येषत्रिविधो वधः ॥९॥ अनुमन्ता विशसिता निहन्ता क्रयविक्रयी । संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः ॥१०॥ मां स भक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहम् । एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥११॥ लोभाद्वा बुद्धिमोहाद्वा बलवीर्यार्थमेव वा । संसर्गाद्वाऽथ पापानामधर्मरुचिता नृणाम् ॥१२॥ भक्षयित्वाऽपि यो मांसं पश्चादपि निवर्तते । तस्यापि सुमहान्धर्मो यः पापाद्विनिवर्तते ॥१३॥ न तत्परस्य संदध्यात्प्रतिकूलं यदात्मनः । एष संक्षेपतो धर्मः कामादन्यत्प्रवर्तते ॥१४॥ अहिंसकानि भूतानि दण्डेन विनिहन्ति यः । आत्मनः सुखमिच्छन्स प्रेत्य न सुखी भवेत् ॥ १५ ॥ ये भक्षयन्ति मांसानि भूतानां जीवितैषिणाम् । भक्ष्यन्ते तेऽपि भूतैस्तैरिति मे नास्ति संशयः ॥१६॥ शुक्राच्च तात संभूतिर्मांसस्येह न संशयः । भक्षणे तु महान्दोषो निवृत्त्या पुण्यमुच्यते ॥१७॥ कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा ।

अक्लेशजननं प्रोक्तमहिंसात्वेन योगिभिः ॥ १८ ॥ अहिंसा सत्यवचनमानृशंस्यं दमो घृणा । एतत्तपो विदुर्धीरा न शरीरस्य शोषणम् ॥ १९ ॥ आत्मनः प्रतिकूलानि परेभ्यो यदि नेच्छसि । परेषां प्रतिकूलेभ्यो निवर्त्तय ततो मनः ॥२०॥ जीवितं यः स्वयं चेच्छेत्कथं सोऽन्यं प्रघातयेत् । यद्यदात्मनिचेच्छेत्तु तत्परस्यापि चिन्तयेत् ॥२१॥ सुखं वा यदि वा दुःखं यत्किञ्चित्क्रियते परे । ततस्तत्तु पुनः पश्चात्सर्व्वमात्मनि जायते॥२२॥यथैवात्मा परस्तद्वद्द्रष्टव्यः सुखमिच्छता । सुखदुःखानि तुल्यानि यथात्मनि तथा परे ॥२३॥ अपहृत्यार्त्तिमार्त्तानां सुखं यदुपजायेत । तस्य स्वर्गोऽपवर्गो वा कलां नार्हति षोडशीम् ॥ २४ ॥ वेदाभ्यासेन सततं शौचेन तपसैव च । अद्रोहेण च भूतानां जातिं स्मरति पौर्व्विकीम् ॥ २५ ॥ मधु मांसं च ये नित्यं वर्जयन्तीह धार्मिकाः । जन्मप्रभृति मद्यं च सर्वे ते मुनयः स्मृताः ॥२६॥ कृमयो भस्म विष्ठा वा निष्ठा यस्येयमीदृशी । स कायः परतापाय युज्यतामिति को नयः ॥२७॥ सर्व्वाणि भूतानि सुखे रमन्ते सर्व्वाणि दुःखस्य भृशं त्रसन्ते । तेषां भयोत्पादनजातखेदः कुर्यान्न कर्माणि हि श्रद्दधानः ॥२८॥ न गोप्रदानं न महीप्रदानं न चान्नदानं हि तथा प्रधानम् । यथा वदन्तीह बुधाः प्रधानं सर्वप्रदानेष्वभयप्रदानम् ॥ २९ ॥ यथा हि ते जीवितमात्मनः प्रियं तथा

परेषामपि जीवितं प्रियम् । संरक्षसे जीवितमात्मनो यथा तथा परेषामपि रक्ष जीवितम् ॥१०॥

# जीवितसाफल्यम् १२

वापी रसवती यस्य भार्या पुत्रवती सती । लक्ष्मीर्दानवती यस्य सफलं तस्य जीवितम् ॥ १ ॥ धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते । अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ २ ॥ दाने तपसि शौर्ये च यस्य न प्रथितं यशः । विद्यायामर्थलाभे च मातुरुच्चार एव सः ॥ ३ ॥ स जीवति गुणा यस्य धर्मो यस्य स जीवति । गुणधर्मविहीनो यो निष्फलं तस्य जीवितम् ॥ ४ ॥ स जातो येन जातेन याति वंशः समुन्नतिम् । परिवर्तिनि संसारे मृतः को वा न जायते ॥ ५ ॥ दानोपभोगरहिता दिवसा यस्य यान्ति वै । स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥ ६ ॥ यस्य जीवन्ति धर्मेण पुत्रा मित्राणि बान्धवाः । सफलं जीवितं तस्य नात्मार्थे को हि जीवति ॥७॥ दानं वित्तादृतं वाचः कीर्तिधर्मौ तथाऽऽयुषः । परोपकरणं कायादसारात्सारमाहरेत् ॥ ८ ॥ यस्मिन् जीवति जीवन्ति बहवः स तु जीवति । काकोऽपि किं न कुरुते चञ्च्वा स्वोदरपूरणम् ॥ ९ ॥ परोपकरणं येषां जागर्ति हृदये सताम् । विपदश्चैव नश्यन्ति सम्पदः स्युः पदे पदे

॥ १० ॥ आत्मार्थं जीवलोकेऽस्मिन्को न जीवति मानवः । परं परोपकारार्थं यो जीवति स जीवति ॥ ११ ॥ दधीचिना पुरा गीतः श्लोकश्च श्रूयते भुवि । सर्वधर्ममयः सारः सर्वधर्मज्ञसंमतः ॥ १२ ॥ परोपकारः कर्तव्यः प्राणैः कण्ठगतैरपि । परोपकारजं पुण्यं न स्यात्क्रतुशतैरपि ॥ १३ ॥ धनानि जीवितञ्चैव परार्थे प्राज्ञ उत्सृजेत् । तन्निमित्तो वरं त्यागो विनाशे नियते सति ॥ १४ ॥ रविश्चन्द्रो घना वृक्षा नदी गावश्च सज्जनाः । एते परोपकाराय युगे दैवेन निर्मिताः ॥ १५ ॥ तृणञ्चाहं वरं मन्ये नरादनुपकारिणः । घासो भूत्वा पशून्पाति भीरून्पाति रणाङ्गणे ॥ १६ ॥ परोपकारो देहेन भवेच्चेत्किमतः परम् । देहिनः करणीय स्याज्जातं देहफलं यतः ॥ १७ ॥ गच्छतस्तिष्ठतो वाऽपि जाग्रतः स्वपतोऽपि वा । यन्न भूतहितार्थाय तत्पशोरिव चेष्टितम् ॥ १८ ॥ कृते प्रत्युपकारो यो वणिग्धर्मो न साधुता । तत्रापि ये न कुर्वन्ति पशवस्ते न मानुषाः ॥ १९ ॥ मातुः किन्तेन जातेन यस्यात्मा ऽपोह दुर्भरः । समर्थो नोपकारी चेत्तस्यापि जननेन किम् ॥ २० ॥ एष मे प्रवरो भाति शुद्धधर्मप्रदो विधिः । परोपकरणादन्यत्सर्वमल्पं स्मृतं बुधैः ॥ २१ ॥ परोपकारशून्यस्य धिङ्मनुष्यस्य जीवितम् । धन्यास्ते पशवो येषां चर्माप्युपकरिष्यति ॥ २२ ॥ जीवि-

तान्मरणं श्रेष्ठं परोपकृतिवर्जितात् । मरणं जीवितं मन्ये
यत्परोपकृतिक्षमम् ॥ २३ ॥ चलं चित्तं चलं वित्तं चले
जीवितयौवने । चलाचलमिदं सर्वं कीर्तिर्यस्य स जीवति
॥ २४ ॥ पशवोऽपि हि जीवन्ति केवलात्मोदरम्भराः । स
पुनर्जीवितश्लाघ्यो यः परार्थं हि जीवति ॥ २५ ॥ अञ्जनस्य
क्षयं दृष्ट्वा वल्मीकस्य तु संचयम् । अवन्ध्यं दिवसं कुर्याद्दा
नाध्ययनकर्मसु ॥ २६ ॥ यदि प्राण्युपकाराय देहोऽयं
नोपयुज्यते । ततः किमुपकारोऽस्य प्रत्यहं क्रियते वृथा
॥ २७ ॥ सज्जनाः परोपकारे शूराः स्वस्मै धने कृपणाः ।
कुसुमस्यो मन्दारं प्राणानप्यय एव मुञ्चन्ति ॥ २८ ॥ यस्य
जना न वदन्ति महस्व यो समरे मरणं विजयं वा । न
श्रुतदानमहातपनतां वा तस्य भवः कृमिकीटसमानः ॥ २९ ॥
पिबन्ति नद्यः स्वयमेव नाम्भः स्वयं न खादन्ति फलानि
वृक्षाः । नादन्ति सस्यं खलु वारिवाहाः परोपकाराय सतां
विभूतयः ॥ ३० ॥ रत्नाकरः किं कुरुते हि रत्नैर्विन्ध्याचलः
किं करिभिः करोति । श्रीखण्डखण्डैर्मलयाचलः किं परो
पकाराय सतां विभूतयः ॥ ३१ ॥ भवन्ति नम्रास्तरवः
फलोद्गमैर्नवाम्बुभिर्भूरिविलम्बिनो घनाः । अनुद्धताः सत्पु
रुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ॥ ३२ ॥
श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन । वि

भाति कायः खलु सज्जनानां परोपकारेण न चन्दनेन ॥३३॥
पद्माकरं दिनकरो विकचं करोति चन्द्रो विकासयति कैर-
वचक्रवालम् । नाभ्यर्थितो जलधरोऽपि जलन्ददाति सन्तः
स्वय पराहितेषु कृताभियोगाः ॥ ३४ ॥ पतत्यवश्यं हि वि-
कृष्यमाणं कालेन यत्नादपि रक्ष्यमाणम् । वर्ष्मामुना सि-
ध्यति चेत्परार्थः स एव मर्त्यस्य परः पुमर्थः ॥ ३५ ॥ दातुः
परोपकृतिनिर्भरचित्तवृत्तेरासन्नदूरगणना नहि संश्रितेषु ।
भानुर्विकासयति हन्त सरोजखण्डं पाणिस्थपङ्कजसमं भुवना-
न्तरेषु ॥ ३६ ॥ किं चन्द्रमाः प्रत्युपकारलिप्सया करोति
गोभिः कुमुदावबोधनम् । स्वभाव एवोन्नतचेतसां सतां परो-
पकारव्यसनं हि जीवितम् ॥ ३७ ॥ जीवित तदपि जीवि-
तमध्ये गण्यते सुकृतिभिः किमु पुंसाम् । ज्ञानविक्रमकला-
कुललज्जात्यागभोगरहितं विफलं यत् ॥ ३८ ॥ यो नात्मजे
न च गुरौ न च भृत्यवर्गे दीने दयां न कुरुते न च बन्धुवर्गे
किन्तस्य जीवितफलं हि मनुष्यलोके काको ऽपि जीवति
चिराय बलिञ्च भुङ्क्ते ॥३९॥ अचिन्त्यरूपो भगवान्निरञ्जनो
विश्वम्भरो ज्ञानमयश्चिदात्मा । विशोधितो येन हृदि क्षयं
नो वृथा गतं तस्य नरस्य जीवितम् ॥ ४० ॥ ब्रह्मादिदेवो-
ऽखिलविश्वदेवो मोक्षप्रदोऽतीतगुणः प्रशान्तः । धृतो न
योगेन हृदि स्वकीये वृथा गतं० ॥ ४१ ॥ आनन्दरूपो

निमग्नोपकर्पो विष्णुस्वरूपा बहुनामरूपः । रूपः समाधौ कलितो न येन वृथा० ॥ ४२ ॥ इदं शरीरं परमार्थसाधनं धर्मैकहेतु बहुपुण्यलब्धम् । लब्ध्वाऽपि यो नो विदधीत धर्मं वृथा० ॥ ४३ ॥ धर्मार्थकामानपि मोक्षमुख्यैर्ददाति या शाश्वतराश्च कीर्तिम् । सा येन विद्या ऽधिगता न यत्नतो वृथा० ॥ ४४ ॥ तपोभिरुग्रैरपि दुर्लभां नृणां सत्सङ्गतिं पुण्यवशादुपेत्य यः । नोद्धारयेत्संसृतितः स्वमात्मना वृथागतं तस्य नरस्य जीवितम् ॥ ४५ ॥

## विद्या १४

विद्याधनं श्रेष्ठधनं तन्मूलमितरद्धनम् । दानेन वर्धते नित्यं न भाराय न नीयते ॥ १ ॥ विद्या सर्वमनुष्याणां जननी नापरा स्मृता । माताऽनया पुमान्यस्माल्लभते लोकद्वये सुखम् ॥ २ ॥ विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम् । कोकिलानां स्वरो रूपं स्त्रीणां रूपं पतिव्रतम् ॥३॥ सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम् । अहार्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा ॥४॥ हर्तुर्न गोचरं याति दत्ता भवति विस्तृता । कल्पान्तेऽपि न या नश्येत्किमन्यद्विद्यया समम् ॥ ५ ॥ अपूर्वः कोऽपि कोशोऽयं विद्यते तव भारति । व्ययतो वृद्धिमायाति क्षयमायाति संचयात् ॥ ६ ॥ सद्विद्या यदि का

चिन्ता वराकोदरपूरणे । शुकोऽप्यशनमाप्नोति हरे राम इति ब्रुवन् ॥७॥ विद्या ददाति विनयं विनयाद्याति पात्रताम् । पात्रत्वाद्धनमाप्नोति धनाद्धर्मन्ततः सुखम् ॥ ८ ॥ विद्यया शस्यते लोके पूज्यते चोत्तमैः सदा । विद्याहीनो नरः प्राज्ञ-सभायां नैव शोभते ॥ ९ ॥ गतेऽपि वयसि ग्राह्या विद्या सर्वात्मना बुधैः । यद्यपि स्यान्न फलदा सुलभा साऽन्य जन्मनि ॥१०॥ नक्षत्रभूषणं चन्द्रो नारीणां भूषणं पतिः । पृथिवीभूषणं राजा विद्या सर्वस्य भूषणम् ॥ ११ ॥ यथा खनन्खनित्रेण नरो वार्यधिगच्छति । तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥१२॥ यथा यथा हि पुरुषः शास्त्रं सम-धिगच्छति । तथा तथा विजानाति विज्ञानञ्चास्य रोचते ॥१३॥ तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये । आयासायापरं कर्म विद्याऽन्या शिल्पनैपुणम् ॥ १४ ॥ श्रुत्वा धर्मं विजानाति श्रुत्वा त्यजति दुर्मतिम् । श्रुत्वा ज्ञानमवाप्नोति श्रुत्वा मोक्षञ्च विन्दति ॥१५॥ वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी । एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥ १६ ॥ धर्माधर्मौ न जानाति लोकोऽयं विद्यया विना । तस्मात्सदैव धर्मात्मा विद्यादानपरो भवेत् ॥ १७ ॥ कामधेनु-गुणा विद्या ह्यकाले फलदायिनी । प्रवासे मातृसदृशी विद्या-गुप्तं धनं स्मृतम् ॥१८॥ तपो विद्या च विप्रस्य निःश्रेयस-

करं परम् । तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते ॥१९॥ अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् । सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥ २० ॥ मातापितृकृताभ्यासो गुणितामेति बालकः । न गर्भच्युतिमात्रेण पुत्रो भवति ॥ २१ ॥ शुनः पुच्छमिव व्यर्थं जीवितं विद्यया विना । न गुह्यगोपने शक्तं न च दंशनिवारणे ॥ २२ ॥ विद्या मित्रं प्रवासेषु भार्या मित्रं गृहेषु च । व्याधितस्यौषधं मित्रं धर्मो मित्रं मृतस्य च ॥२३॥ सुखार्थी यस्त्यजेद्विद्यां विद्यार्थी वा त्यजेत्सुखम् । सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम् ॥२४॥ गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थं नैव साधनम् ॥२५॥ बालादपि ग्रहीतव्यं युक्तमुक्तं मनीषिभिः । रवेरविषये किं न प्रदीपस्य प्रकाशनम् ॥२६॥ परं पलितकायेन कर्तव्यः श्रुतसंग्रहः । न तत्र धनिनो यान्ति यत्र यान्ति बहुश्रुताः ॥ २७ ॥ किं कुलेन विशालेन विद्याहीनस्य देहिनः । विद्यावान्पूज्यते लोके नाविद्यः परिपूज्यते ॥ २८ ॥ पुरुषं साहसैकाग्र्यधर्मनायासकारिणम् । लक्ष्मीर्वैमुख्याति क्वापि विद्याऽभ्यस्ता न मुञ्चति ॥२९॥ किं तस्य मानुषत्वेन बुद्धिर्यस्य न निर्मला । बुद्ध्याऽपि किं फलं तस्य येन विद्या न साधिता ॥३०॥ विद्यया विनयाऽवाप्तिः सा चेदविनयावहा । किं कुर्मः कम्मति भूपो गरदायां स्व

मातरि ॥ ३१ ॥ यस्येदं जन्म पाश्चात्त्यं तमाश्वेव महामते ।
विशन्ति विमला विद्या मुक्ता वेणुमिवोत्तमम् ॥३२॥ हा हा
पुत्रक नाधीतं सुगतैतासु रात्रिषु । तेन त्वं विदुषां मध्ये पङ्के
गौरिव सीदसि ॥ ३३ ॥ पुस्तकेषु च नाधीतं नाधीतं गुरुस-
न्निधौ । न शोभते सभामध्ये हंसमध्ये बको यथा ॥३४॥
बाढं गुणवती विद्या न मुदे विनयं विना । मूर्खताऽपि मुदे
भूयान्महत्सु विनयान्विता ॥३५॥ पुस्तकस्था तु या विद्या
परहस्तगतं धनम् । कार्यकाले समुत्पन्ने न सा विद्या न
तद्धनम् ॥२६॥ प्रथमे नार्जिता विद्या द्वितीये नार्जितं धनम् ।
तृतीये नार्जितं पुण्यं चतुर्थे किं करिष्यति ॥ ३७ ॥ प्रा नुवै
जायते लक्ष्म्या सरस्वत्यऽपि जायते । उभयोरपि संयोगो न
प्रायो दृश्यते भुवि ॥३८॥ धर्मार्थौ यत्र न स्यातां शुश्रूषा
वापि तद्विधा । तत्र विद्या न वक्तव्या शुभं बीजमिवोषरे
॥३९॥ यः पठति लिखति पश्यति परिपृच्छति पण्डितानु-
पाश्रयति । तस्य दिवाकरकिरणैर्नलिनीदलमिव विकास्यते
बुद्धिः ॥४०॥ निरक्षरे वीक्ष्य महाधनत्वं विद्याऽनवद्या विदुषा
न हेया । रत्नावतंसाः कुलटाः समीक्ष्य किमार्यनार्यः कुलटा
भवन्ति ॥४१॥ न चोरहार्यं न च राजहार्यं न भ्रातृभाज्यं न
च भारकारि । व्यये कृते वर्धते एव नित्यं विद्याधनं सर्वधन-
प्रधानम् ॥ ४२ ॥ वसुमतीपतिना नु सरस्वती बलवता रिपु-

पाऽपि न नीयते । समविभागहरैर्न विभज्यते विषयिभोग्यपु
चैरपि सेव्यते ॥ ४३ ॥ मातेव रक्षति पितेव हिते नियुङ्क्ते
कान्तेव चाभिरमयत्यपनीय खेदम् । लक्ष्मीं तनोति वितनोति
च दिक्षु कीर्तिं किं किं न साधयति कल्पलतेव विद्या ॥४४॥
विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं विद्या भोगकरी
यशःसुखकरी विद्या गुरूणां गुरुः । विद्या बन्धुजनो विदेशगमने
विद्या परं दैवतं विद्या राजसु पूज्यते न हि धनं विद्याविहीनः
पशुः ॥ ४५ ॥ विद्या नाम नरस्य कीर्तिरतुला भाग्यक्षये
चाश्रयो धेनुः कामदुघा रतिश्च विरहे नेत्रं तृतीयञ्च सा ।
सत्कारायतनं कुलस्य महिमा रत्नैर्विना भूषणं तस्मादन्यमु
पेक्ष्य सर्वविषयं विद्याऽधिकारं कुरु ॥ ४६ ॥ हर्तुर्याति न
गोचरं किमपि शं पुष्णाति सर्वात्मना ह्यर्थिभ्यः प्रतिपाद्यमा
नमनिशं प्राप्नोति वृद्धिं पराम् । कल्पान्तेष्वपि न प्रयाति
निधनं विद्याख्यमेवद्धनं येषां तान्प्रति मानमुज्झत नृपाः
कस्तैः सह स्पर्धते ॥४७॥ केयूरा न विभूषयन्ति पुरुषं हारा
न चन्द्रोज्ज्वला न स्नानं न विलेपनं न कुसुमं नालङ्कृता
मूर्धजाः । वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते
क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥ ४८ ॥
क्षान्तिश्चेत्कवचेन किं किमरिभिः क्रोधोऽस्ति चेद्देहिनां ज्ञाति
श्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम् । किं सर्पैर्यदि

दुर्जनः किमु धनैर्विद्याऽनवद्या यदि व्रीडा चेत्किमु भूषणैः सुकविता यद्यस्ति राज्येन किम् ॥४९॥ अस्त्यद्यापि चतुः-समुद्रपरिखापर्यन्तमुर्वीतलं वर्तन्तेऽपि च तत्र तत्र रसिका गोष्ठीषु सक्ता नृपाः एकस्तत्र निरादरो भवति चेदन्यो भवेत्सा-दरो वाग्देवी वदनाम्बुजे वसति चेत्को नाम दीनोजनः ॥५०॥

# पण्डितः १५

पण्डिते हि गुणाः सर्वे मूर्खे दोषाश्च केवलाः । तस्मा-न्मूर्खसहस्रेभ्यः प्राज्ञ एको विशिष्यते ॥ १ ॥ प्राज्ञो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः । गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसः ॥२॥ शोकस्थानसहस्राणि भयस्थान-शतानि च । दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ ३ ॥ नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् । आपत्स्वपि न मुह्यन्ति नराः पण्डितबुद्धयः ॥ ४ ॥ निषेवते प्रशस्तानि निन्दितानि न सेवते । अनास्तिकः श्रद्दधान एतत्पण्डितलक्षणम् ॥ ५ ॥ क्रोधो हर्षश्च दर्पश्च ह्रीस्तम्भो मान्यमानिता । यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ ६ ॥ यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे । कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥७॥ यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः । समृद्धिरसमृद्धिर्वा स वै

स पुराद्बहिरस्तु मे । कुम्भकारोऽपि यो विद्वान्स तिष्ठतु पुरे मम ॥ २१ ॥ सविद्यः पुरुषः श्रेष्ठो यत्र कुत्रापि तिष्ठति । तत्रैव भवति श्रीमान् पूजापात्रञ्च भूभुजाम् ॥२२॥ सेनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च । सर्वलोकाधिपत्यञ्च वेदशास्त्रविदर्हति ॥ २३ ॥ पण्डितो हि वरं शत्रुर्न मूर्खो हितकारकः । वानरेण हतो राजा विप्रचौरेण रक्षितः ॥२४॥ मातृवत्परदारांश्च परद्रव्याणि लोष्ठवत् । आत्मवत्सर्वभूतानि यः पश्यति स पश्यति ॥ २५ ॥ विद्यावृद्धान् सदैव त्वमुपासीथा युधिष्ठिर । शृणुयास्तेच यद्ब्रूयुः कुर्याश्चैवाविचारयन् ॥२६ ॥ प्रातरुत्थाय तान् राजन् पूजयित्वा यथाविधि । कृत्यकाले समुत्पन्ने पृच्छेथाः कार्यमात्मनः ॥ २७ ॥ ते तु समानिता राजंस्त्वया कार्यहितार्थिना । प्रवक्ष्यन्ति हितं तात सर्वथा तव भारत ॥ २८ ॥ विद्याविनयोपेता हरति न चेतांसि कस्य मनुजस्य । काञ्चनमणिसंयोगो नो जनयति कस्य लोचनानन्दम् ॥२९॥ यद्यपि भवति कुरूपो वस्त्रालङ्कारवेषपरिहीनः । सज्जनसभां प्रविष्टो राजति विद्याऽधिकः पुरुषः ॥३०॥ विद्वत्कवयः कवयः केवलकवयस्तु केवलं कपयः । कुलजाया सा जाया केवलजाया तु केवलं माया ॥ ३१ ॥ न पण्डिताः साहसिका भवन्ति श्रुत्वाऽपि ते संतुलयन्ति तत्त्वम् । तत्त्वं समादाय समाचरन्ति स्वार्थं प्रकुर्वन्ति परस्य चार्थम् ॥ ३२ ॥ संपूर्णकुम्भो न करोति शब्दमर्धो घटो

पापमुपैति नूनम् । विद्वान्कुलीनो न करोति गर्वं गुणैर्विहीना
बहु जल्पयन्ति ॥ १३ ॥ क्षिप्रं विजानाति चिरं शृणोति
विज्ञाय चार्थं भजते न कामात् । नासंपृष्टो व्युपयुङ्क्ते परार्थे
तत्प्रज्ञानं प्रथमं पण्डितस्य ॥ १४ ॥ इभतुरगशतैः प्रयान्तु
मूढा धनरहिता विबुधाः प्रयान्तु पद्भ्याम् । गिरिशिखरग-
ताऽपि काकपङ्क्तिः पुलिनगतैर्न समा हि राजहंसैः ॥ १५ ॥
उद्गीरितोऽर्थः पशुनाऽपि गृह्यते हयाश्च नागाश्च वहन्ति
चोदिताः । अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला
हि बुद्धयः ॥ १६ ॥ विद्याविलासमनसो धृतशीलशिक्षाः
सत्यव्रता रहितमानमलापहाराः । संसारदुःखदलनेन सुभूषिता
ये धन्या नरा विहितकर्मपरोपकाराः ॥ १७ ॥ धन्या मन-
द्विवमयी मनसः महद्विरम्यैव काऽपि रचना वचनावलीनाम् ।
लोकोत्तरा च कविताकविताप्रभुत्वा विद्यावतां सकलव-
गिरां दवीयः ॥ १८ ॥ जैव पानरत नष्टं कुपठितं स्वाध्या-
यहीन द्विज योप कापुरुष इव गतरय मूर्ख परिणामकम् ।
राजानं च कुमन्त्रिभिः परिहृतं ग्रामश्च सोपद्रवं भार्यां यौवन-
गर्वितां पररतां मुञ्चन्ति ते पण्डिताः ॥ १९ ॥ अधिगत
परमार्थान्पण्डितान्माऽवमंस्थास्तृणमिव लघुलक्ष्मीर्नैव तान्सं-
रुणद्धि । अभिनवमदलेखाश्यामगण्डस्थलानां न भवति
बिसतन्तुर्वारणं वारणानाम् ॥ ४० ॥

—०—

## मूर्खः १६

वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह । न मूर्खजनसंसर्गः सुरेन्द्रभुवनेष्वपि ॥ १ ॥ मूर्खस्य पञ्च चिह्नानि गर्वो दुर्वचनं मुखे । हठी चैव विषादी च परोक्तं नैव मन्यते ॥ २ ॥ मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः । अशुभं वाक्यमादत्ते पुरीषमिव सूकरः ॥ ३ ॥ मूर्खोऽपि मूर्खं दृष्ट्वा च चन्दनादपि शीतलः । यदि पश्यति विद्वांसं मन्यते पितृघातकम् ॥ ४ ॥ उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये । पयःपानं भुजङ्गानां केवलं विषवर्धनम् ॥ ५ ॥ वरं शराहस्तस्य चण्डालागारवीथिषु । भिक्षार्थमटनं राम न मौर्ख्यहतजीवितम् ॥ ६ ॥ अत्याचारो ह्यनाचारोऽत्यन्तनिन्दाऽतिसंस्तुतिः । अतिशौचमशौचं वा षड्विधं मूर्खलक्षणम् ॥ ७ ॥ अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनः । अर्थांश्चाकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ॥ ८ ॥ अनाहूतः प्रविशति ह्यपृष्टो बहु भाषते । अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥९॥ अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च । कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥ १० ॥ परं क्षिपति दोषेण वर्तमानः स्वयं तथा । यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः ॥ ११ ॥ मदोपशमनं शास्त्रं खलानां कुरुते मदम् । चक्षुःप्रकाशकं तेज उलूकानामिवान्धताम् ॥ १२ ॥ शोभते विदुषां मध्ये नैव निर्गुणमानसः । अन्तरे

२५ ॥ गुणिगणगणनारम्भे न पतति कठिनी सुसम्भ्रमाद्यस्य । तेनाम्बा यदि सुतिनी वद वन्ध्या कीदृशी भवति ॥२६॥ येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः । ते मर्त्यलोके भुवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति ॥ २७ ॥ मुक्ताफलैः किं मृगपक्षिणां च मिष्टान्नपानं किमु गर्दभानाम् । अन्धस्य दीपो बधिरस्य गीतं मूर्खस्य किं धर्मकथाप्रसङ्गः ॥ २८ ॥ स्वायत्तमेकान्तगुणं विधात्रा विनिर्मितं छादनमज्ञतायाः । विशेषतः सर्वविदां समाजे विभूषणं मौनमपण्डितानाम् ॥२९॥ शास्त्राण्यधीत्यापि भवन्ति मूर्खा यस्तु क्रियावान्पुरुषः स विद्वान् । सुचिन्तितं चौषधमातुराणां न नाममात्रेण करोत्यरोगम् ॥ ३० ॥ सत्यं तपो ज्ञानमहिंसता च विद्वत्प्रणामश्च सुशीलता च । एतानि यो धारयते स विद्वान्न केवलं यः पठते स विद्वान् ॥ ३१ ॥ अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः । दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥ ३२ ॥ स्थितो न खादामि हसन्न जल्पे गतं न शोचामि कृतं न मन्ये । द्वयोस्तृतीयो न भवामि राजन् केनास्मि मूर्खो वद कारणेन ॥ ३३ ॥ वरं दरिद्रः श्रुतिशास्त्रपारगो न चापि मूर्खो बहुरत्नसंयुतः । सुलोचना जीर्णपटापि शोभते न नेत्रहीना कनकैरलंकृता ॥ ३४ ॥ काव्यं करोतु परिजल्पतु संस्कृतानि सर्वाः कलाः समधिगच्छतु वाच्य,

मानाः । लोकस्थितिं यान्ति न यान्ति पयावादिरय मवस्य मूलानिकरस्य न याकवनी ॥ ३० ॥ किं गर्भितेन हपभेण परानिसन किं कोकिलस्वरकृतेन विना वसन्तम् । किं कातरेणदृगुणसपरिग्रहण किं जीवितेन पुरुषेण निरक्षरेण ॥३६॥ यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्ध समभव तदा सर्वज्ञो ऽस्मीत्यभवदवलिप्तं मम मन । यदा किंचित्किंचिद्बुधजनस काशादवगत तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥ ३७ ॥ मूसरा सुरुभ मनस्व कुरुते मूलस्य याष्टौ गुणाः निश्चिन्तो बहुभोजन ऽतिमुखरा रात्रिन्दिवा स्वप्नभाक् । कार्याकार्यविचारणान्धबधिरो मानापमान समः प्रायेणाम यवार्जितो दृढवपुर्मूर्खः सुख जीवति ॥ ३८ ॥ प्रवया वार पितु मलन हुतभुक् छमण मूपातपा मागेन्द्रो निशितांकु शेन समदा दण्डन गोगर्दभौ । व्याधिर्भेषजसंग्रहैश्च विविधै मन्त्रप्रयोगैर्विषं सर्वस्यौषधमस्ति शास्त्रविहित मूर्खस्य नास्त्यौषधम् ॥३९॥ मीमांसा पठिता न यत्पानिषवैव श्रुता सत्वतः श्रीमच्छङ्करभाष्यता भगवती गीताऽप्यधीता न यः । सिद्धान्तापमतं शिरोमणिमत ज्ञात्वाऽपि किंचिच्चयो यहा पार्षदं गताः कथमहो लज्जां वजन्ते न ते ॥ ४० ॥

## सज्जनस्वभावः १७

मुमुक्षाः सर्वभूतानां महान्ताः शमितव्रताः । सेव्याः सम्मामवक्काराः पुण्यश्रवणदर्शनाः ॥ १ ॥ क्षमास्थिरयानि

पुष्पाणि वासयन्ति करद्वयम्। अहो सुमनसां वृत्तिर्वामदक्षिणयोः समा ॥२॥ किमत्र चित्रं यत्सन्तः परानुग्रहतत्पराः। नहि स्वदेहशैत्याय जायन्ते चन्दनद्रुमाः ॥ ३ ॥ धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः। प्रभवोऽप्यप्रमत्तास्ते महामाहिमशालिनः ॥ ४ ॥ संपदो महतामेव महतामेव चापदः। वर्द्धते क्षीयते चन्द्रो न तु तारागणः क्वचित् ॥५॥ अहो किमपि चित्राणि चरित्राणि महात्मनाम्। लक्ष्मीं तृणाय मन्यन्ते तद्भारेण नमन्त्यपि ॥ ६ ॥ वज्रादपि कठोराणि मृदूनि कुसुमादपि। लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥ ७ ॥ विकारं नैव गच्छन्ति सङ्गदोषेण साधवः। आवेष्टितं महासर्पैश्चन्दनं न विषायते ॥८॥ सज्जनं व्यजनं मन्ये चारुवंशसमुद्भवम्। आत्मानञ्च परिभ्राम्य परतापनिवारणम् ॥ ९ ॥ सद्भिस्तु लीलया प्रोक्तं शिलालिखितमक्षरम्। असद्भिः शपथेनापि जले लिखितमक्षरम् ॥१०॥ नारिकेलसमाकारा दृश्यन्तेऽपि च सज्जनाः। अन्ये बदरिकाकारा बहिरेव मनोहराः ॥११॥ परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम्। धर्मे स्वीयमनुष्ठानं कस्यचित्सुमहात्मनः ॥ १२ ॥ यथा चित्तं तथा वाचो यथा वाचस्तथा क्रियाः। चित्ते वाचि क्रियायाञ्च साधूनामेकरूपता ॥१३॥ उपकर्तुं प्रियं वक्तुं कर्तुं स्नेहमकृत्रिमम्। सुजनानां स्वभावोऽयं केनेन्दुः शिशिरीकृतः ॥ १४ ॥ निर्गुणेष्वपि सत्त्वेषु

दयां कुर्वन्ति साधवः । नहि संहरते ज्योत्स्नां चन्द्र-श्चाण्डालवेश्मनि ॥ १५ ॥ उपकारिषु यः साधुः साधुत्वे तस्य को गुणः । अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ १६ ॥ हृदयानि सतामेव कठिनानीति मे मतिः । खलवाग्विशिखैस्तीक्ष्णैर्भिद्यन्ते न मनाग्यतः ॥ १७ ॥ स्वभावं न जहात्येव साधुरापद्गतोऽपि सन् । न त्यजन्ति रुतं मञ्जु काकसम्पर्कगाः पिकाः ॥ १८ ॥ स्वगुणान्परदोषांश्च वक्तुं मार्गयितुं पराम् । यावन्नारं निराकर्तुं सतां जिह्वा जडायते ॥ १९ ॥ पातितोऽपि कराघातैरुत्पतत्येव कन्दुकः । प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तयः ॥ २० ॥ प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा । आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधवः ॥ २१ ॥ कुसुमस्तबकस्येव द्वे वृत्ती स्तो मनस्विनः । मूर्ध्नि वा सर्वलोकस्य विशीर्येत वनेऽथवा ॥ २२ ॥ स्थिरा शैली गुणवतां खलबुद्ध्या न बाध्यते । रत्नदीपस्य हि शिखा वात्ययापि न नाश्यते ॥ २३ ॥ उदये सविता रक्तो रक्तश्चास्तमये तथा । सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥ २४ ॥ विवेकः सह सम्पत्त्या विनयो विद्यया सह । प्रभुत्वं प्रश्रयोपेतं चिह्नमेतन्महात्मनाम् ॥ २५ ॥ स्वभावं न जहात्येव साधुरापद्गतोऽपि सन् । कर्पूरः पावकस्पृष्टः सौरभं लभतेतराम् ॥ २६ ॥ चित्ते साम्यः क्षमा धर्मो दुःखे दैन्यविहीनता । निर्दम्भता सदाचारे स्वभावो

ऽयं महात्मनाम् ॥ २७ ॥ परुषञ्च न भाषन्ते सदा सन्तो द्विजप्रियाः । न्यायोपेता गुणोपेताः सर्वलोकहितैषिणः ॥ २८ ॥ न स्मरन्त्यपराद्धानि स्मरन्ति सुकृतान्यपि । असंभिन्नार्यमर्यादाः साधवः पुरुषोत्तमाः ॥ २९ ॥ शैले शैले न माणिक्यं मौक्तिकं न गजे गजे । साधवो नहि सर्वत्र चन्दनं न वने वने ॥ ३० ॥ सुलभाः पुरुषा लोके साधवः साधुकारिषु । असाधुषु पुनः साधुर्दुर्लभः पुरुषो भुवि ॥ ३१ ॥ ते साधवः सुजन्मानस्तैरियं भूषिता धरा । अपकारिषु भूतेषु ये भवन्त्युपकारिणः ॥ ३२ ॥ यस्य चित्तं द्रवीभूतं कृपया सर्वजन्तुषु । स धन्यः संसृतौ पुण्यः किं जटाभस्मवल्कलैः ॥ ३३ ॥ शिष्टाचारः प्रियो येषु दमो येषु प्रतिष्ठितः । सुखं दुःखं समं येषां सत्यं येषां परायणम् ॥ ३४ ॥ न धनार्थं यशोऽर्थं वा धर्मस्तेषां युधिष्ठिर । अवश्य कार्य्यं इत्येव शरीरस्य क्रियास्तथा ॥ ३५ ॥ न भयं क्रोधचापल्ये न शोकस्तेषु विद्यते । न धर्मध्वजिनश्चैव न गुह्यं किञ्चिदास्थिताः ॥ ३६ ॥ आमरणान्ताः प्रणयाः कोपास्तत्क्षणभङ्गुराः । परित्यागाश्च निःसङ्गा भवन्ति हि महात्मनाम् ॥ ३७ ॥ दान्तिदन्तसमानं हि निःसृतं महतां वचः । कूर्मग्रीवेव नीचानां पुनरायाति याति च ॥३८॥ सज्जना एव साधूनां प्रथयन्ति गुणोत्करम् । पुष्पाणां सौरभं प्रायस्तनुते दिक्षु मारुतः ॥ ३९ ॥ कर्तव्यमाचरन्कार्यमकर्तव्यमनाचरन् ।

विप्लुति प्रकृतावाये न या आय इति स्मृता ॥ ४० ॥ महतां मार्यमनैव विपत्तिरपि शोभते । दन्तभङ्गो हि नागानां श्लाघ्यो गिरिविदारणे ॥ ४१ ॥ भवन्तु महतां नित्य मवस्तुप प्रकोपलम् । आपरस्तु च महाशैलशिलासहातककशम् ॥ ४२ ॥ सुपयसि पिबि मापाये योगे रज्यन्ति नोत्तमाः । सम्रज्या म्भोजाकिञ्जल्कं न मार्ययति शैवलम् ॥ ४३ ॥ उत्तमः क्लेश विक्षोभ क्षम सोढुं नहीतरः । मणिरेव महाशाणघर्षणं न तु मृत्कणः ॥ ४४ ॥ ये च मेघास्तरममः मेघान्तरममश्च ये । सर्वे स्थिता महात्मानो दुर्गाण्यातरन्ति ते ॥ ४५ ॥ रक्षत्व कमलानां सत्पुरुषाणां परोपकारित्वम् । असतां च निर्दयत्वं स्वभावसिद्धं त्रिषु त्रितयम् ॥ ४६ ॥ संपदि यस्य न हर्षो विपदि विषादो रणे च धीरत्वम् । तं भुवनत्रयति लक जनयति जननी सुतं विरलम् ॥ ४७ ॥ अमियवचनद रिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः । परपरिवादनिवृत्तैः क्वचित्क्वचिन्मण्डिता वसुधा ॥ ४८ ॥ वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः । करणं परोपकरणं येषां केषां न ते वन्द्याः ॥ ४९ ॥ सुमनो न याति वैरं परहितनिरता विनाशकालेऽपि । छेदेऽपि चन्दनतरुः सुरभयति मुखं कु ठारस्य ॥ ५० ॥ मूकः परापवादे परदारनिरीक्षणेऽप्यन्धः । पङ्गुः परधनहरणे स जयति लोकत्रये पुरुषः ॥ ५१ ॥ किं मधुना किं विधुना किं सुधया किं च वसुधयाऽखिलया ।

यदि हृदयहारिचरितः पुरुषः पुनरेति नयनयोरयनम् ॥५२॥ शरदि न वर्षति गर्जति वर्षति वर्षासु निःस्वनो मेघः। नीचो वदति न कुरुते न वदति सुजनः करोत्येव ॥ ५३ ॥ छिन्नोऽपि रोहति तरुश्चन्द्रः क्षीणोऽपि वर्धते लोके। इति विमृशन्तः सन्तः संतप्यन्ते न ते विपदा ॥ ५४ ॥ इयमुन्नतसत्त्वशालिनां महतां कापि कठोरचित्तता। उपकृत्य भवन्ति दूरतः परतः प्रत्युपकारशङ्कया ॥ ५५ ॥ न वैरमुद्दीपयति प्रशान्तं न दर्पमारोहति नास्तमेति। न दुर्गतोऽस्मीति करोत्यकार्यं तमार्यशील परमाहुरार्याः ॥ ५६ ॥ दानाय लक्ष्मीः सुकृताय विद्या चिन्ता परब्रह्मविनिश्चयाय। परोपकाराय वचांसि यस्य वन्द्यस्त्रिलोकीतिलकः स एव॥५७॥ न स्वे सुखे वै कुरुते प्रहर्षं नान्यस्य दुःखे भवति प्रहृष्टः। दत्त्वा न पश्चात्कुरुते हि तापं स कथ्यते सत्पुरुषार्यशीलः ॥ ५८ ॥ आदिमध्यनिधनेषु सौहृदं सज्जने भवति नेतरे जने। छेदतापननिघर्षताडनैर्नान्यभावमुपयाति काञ्चनम् ॥ ५९ ॥ तुङ्गात्मनां तुङ्गतराः समर्था मनोरथान्पूरयितुं न नीचाः। धाराधरा एव धराधराणां निदाघदाहं शमितुं न नद्यः ॥ ६० ॥ अज्ञातगोत्रा विदितात्मतत्त्वा लोकस्य दृष्ट्या जडवद्भ्रमन्तः। चरन्ति भूतान्यनुकम्पमानाः सन्तो यदृच्छोपनतोपभोग्याः ॥ ६१ ॥ कुलं पवित्रं जननी कृतार्था विश्वम्भरा पुण्यवती च तेन। अपारसंवित्सुखसागरेऽस्मिँल्लीनं

परे यद्यपि यस्य चेतः ॥ ६२ ॥ विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय । खलस्य साधोर्विपरीतमेतज्ज्ञानाय दानाय च रक्षणाय ॥ ६३ ॥ मेरोः शृङ्गं सप्तधा समपाण कस्याप्यादिः सर्षपस्यैकदेशः । बिन्दुः सिन्धुः सिन्धुरप्येकबिन्दुरुच्यो लुब्धे साधुनीचोपकारे ॥ ६४ ॥ पात कौशिकचतुरान्स्यपः कृपान्याचते मक्षपर्द पिपासया । ह ऽपि पूरयति विश्वमम्बुना हन्त हन्त महतामुदारता ॥ ६५ ॥ अविरत परकार्यकर्तां सतां मधुरिमाऽतिशयेन वचोऽमृतम् । अपि च मानसमम्बुनिधिर्यशो विमलशारदपार्वणचन्द्रिका ॥ ६६ ॥ वनेऽपि सिंहा मृगमांसभक्षिणो बुभुक्षिता नैव तृणं चरन्ति । एवं कुलीना व्यसनाभिभूता न नीचकर्माणि समाचरन्ति ॥ ६७ ॥ विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः । यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ॥६८॥ क्षुद्रः स एव कुलमण्डन एव धीरः श्लाघ्यो विपत्स्वपि न मुञ्चति यः स्वभावम् । तप्तं यथा दिनकरस्य मरीचिमालैर्दैः स्वमहावे हिम न तु शीतलत्वम् ॥६९॥ कान्ताकटाक्षविशिखा न लुनन्ति यस्य चित्तं न निर्दहति कोपकृशानुतापः । कर्षन्ति भूरिविषयाश्च न लोभपाशैर्लोकत्रयं जयति कृत्स्नमिदं स धीरः ॥ ७० ॥ आक्रान्तितोऽपि सुजनो न वदत्यवाच्यं निष्पीडितो मधुरमुद्वमतीक्षुदण्डः । नीचो जनो गुणशतैरपि सेव्यमानो ह।

स्येन तद्वदति परकलहेऽप्यवाच्यम् ॥ ७१ ॥ दाता न दापयति दापयिता न दत्ते यो दानदापनपरो मधुरं न वक्ति। दानञ्च दापनमथो मधुरा च वाणी त्रीण्यप्यमूनि खलु सत्पुरुषे वसन्ति ॥ ७२ ॥ केनाञ्जितानि नयनानि मृगाङ्गनानां को वा करोति रुचिराङ्गरुहान्मयूरान् । कश्चोत्पलेषु दलसंनिचयं करोति को वा करोति विनयं कुलजेषु पुंसु॥७३॥ नहि भवति वियोगः स्नेहविच्छेदहेतुर्जगति गुणनिधीनां सज्जनानां कदाचित् । घनतिमिरनिरुद्धो दूरसंस्थोऽपि चन्द्रः किमु कुमुदवनानां प्रेमभङ्गं करोति ॥ ७४ ॥ मनसि वचसि काये पुण्यपीयूषपूर्णास्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः । परगुणपरमाणून्पर्वतीकृत्य नित्यं निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ ७५ ॥ घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुकाण्डम् । दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम् ॥७६॥ करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता मुखे सत्या वाणी विजयि भुजयोर्वीर्यमतुलम् । हृदि स्वच्छा वृत्तिः श्रुतमधिगतैकव्रतफलं विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥ ७७ ॥ वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम् । भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खलेष्वेते येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो

नयः ॥ ७८ ॥ गर्वं नोद्वहते न निन्दति परानो भाषते निष्ठुरं प्रोक्तं केनचिदप्रियं च सहते क्रोधं च नालम्बते। श्रुत्वा काव्यमलक्षणं परकृतं संतिष्ठते मूकवद्दोषांश्छादयते स्वयं न कुरुते ह्येतत्सतां लक्षणम्॥७९॥नभसेनोऽप्यनन्तापरगुणकथनैः स्वान्गुणान् ख्यापयन्तः स्वार्थान्सम्पादयन्तो विततपृथुतरारम्भयत्नाः परार्थे। क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान्दुर्मुखान्दुःखयन्तः सन्तः साश्चर्यचर्या जगति बहुमताः कस्य नाभ्यर्थनीयाः ॥ ८० ॥

## दुर्जनपद्धतिः१८

दुर्जनं प्रथमं वन्दे सज्जनं तदनन्तरम्। मुखप्रक्षालनात्पूर्वं गुदप्रक्षालनं यथा ॥ १ ॥ सर्पदुर्जनयोर्मध्ये वरं सर्पो न दुर्जनः। सर्पो दशति कालेन दुर्जनस्तु पदे पदे ॥ २ ॥ खलो न साधुतां याति सद्भिः संबोधितोऽपि सन्। सरित्पूरप्रपूर्णोऽपि क्षारो न मधुरायते ॥ ३ ॥ दह्यमानाः सुतीव्रेण नीचाः परयशोऽग्निना। अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते ॥ ४ ॥ उपकारोऽपि नीचानामपकारो हि जायते। पयःपानं भुजङ्गानां केवलं विषवर्धनम् ॥ ५ ॥ दुर्जनः परिहर्तव्यो विद्ययाऽलंकृतोऽपि सन्। मणिना भूषितः सर्पः किमसौ न भयंकरः ॥ ६ ॥ सद्भिः सभाप्य मानोऽपि दुरात्मा पापपूरुषः। घृष्यमाण इवाङ्गारो निर्मलत्वं न गच्छति ॥७॥ खलः सर्षपमात्राणि पराच्छिद्राणि पश्यति।

आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥ ८ ॥ स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजङ्गमः । हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः ॥ ९ ॥ न विना परवादेन रमते दुर्जनो जनः । काकः सर्वरसान् भुङ्क्ते विनाऽमेध्यं न तृप्यति ॥ १० ॥ दुर्जनैरुच्यमानानि वचांसि मधुराण्यपि । अकाल-कुसुमानीव भयं संजनयन्ति मे ॥ ११ ॥ दुर्जनो दोषमादत्ते दुर्गन्धमिव सूकरः । सज्जनश्च गुणग्राही हंसः क्षीरमिवाम्भसः ॥ १२ ॥ दुर्जनेन समं सख्यं प्रीतिश्चापि न कारयेत् । उष्णो दहति चाङ्गारः शीतः कृष्णायते करम् ॥ १३ ॥ दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् । मधु तिष्ठति जिह्वाऽग्रे हृदि हालाहलं विषम् ॥ १४ ॥ वर्जनीयो मति-मता दुर्जनः सख्यवैरयोः । श्वा भवत्यपकाराय लिहन्नपि दशन्नपि ॥ १५ ॥ खलः सत्क्रियमाणोऽपि ददाति कलहं सताम् । दुग्धधौतोऽपि किं याति वायसः कलहंसताम् ॥ १६ ॥ दुर्जनस्य विशिष्टत्वं परोपद्रवकारणम् । व्याघ्रस्य चोपवासेन पारणं पशुमारणम् ॥ १७ ॥ अशक्ताः शक्ति-मात्मीयां श्लाघन्ते खलु दुर्जनाः । ते भवन्त्युपहासाय महता-मेव सन्निधौ ॥ १८ ॥ अहो बत महत्कष्टं विपरीतमिदं जगत् । येनापत्रपते साधुरसाधुस्तेन तुष्यति ॥ १९ ॥ मनस्यन्य-द्वचस्यन्यत्कार्ये चान्यद्दुरात्मनाम् । मनस्येकं वचस्येकं कर्मण्येकं सदात्मनाम् ॥ २० ॥ खलः करोति दुर्वृत्तं नूनं

फलति मादृशु । दुर्जननोऽपरस्मीतो पञ्चनश्च महाद्ये
॥ २१ ॥ न देवाय न धर्माय न बन्धुभ्यो न चार्थिने ।
दुर्जनस्यार्जितं वित्तं भुज्यते राजतस्करैः ॥ २२ ॥ मुखं
पद्मदलाकारं वाचा चन्दनशीतला । हृदयं क्रोधसंयुक्तं
त्रिविधं धूर्तलक्षणम् ॥ २३ ॥ का पुरुषः कुक्कुरश्च भोजनैक
परायणः । लालितः पार्श्वमायाति वारितो न च गच्छति
॥ २४ ॥ दुर्जनो दूषयत्येव परेषां गुणगौरवम् । मलिना
कुरुते धूमः सर्वथा विमलाम्बरम् ॥२५॥ खलानां कण्टकानां च
द्विविधैव प्रतिक्रिया । उपानन्मुखभङ्गो वा दूरतो वाऽपि
वर्जनम् ॥ २६ ॥ दुर्जनः स्वस्वभावेन परकार्यं विनश्यति ।
नोदरतृप्तिमायाति मूषकः वस्त्रभक्षकः ॥ २७ ॥ अस्पृश्य
शूद्रदापात् गुणान् गृह्णाति पण्डितः । दोषग्राही गुणत्यागी
पल्लोलीव हि दुर्जनः ॥ २८ ॥ यस्मिन्नेव भ्रुक्तस्तमेव
निजचेष्टितैः । दूषयत्यचिरेणैव घुणकीट इवाधमः ॥२९॥
तक्षकस्य विषं दन्ते मक्षिकाया विषं शिरः । वृश्चिकस्य
विषं पुच्छे सर्वाङ्गे दुर्जनो विषम् ॥ ३० ॥ खलं दयाम
विमर्दयति विप्रस्य सम्मतम् । विना स्तुमापि दृढ्दपवन्मूर्खस्य
भक्षणम् ॥ ३१ ॥ अभिप्राय यथा दुष्टाग्मन्तो गच्छन्ति
निर्धनम् । एवं सज्जनमाक्रुश्य नीचो भवति निर्दयः ॥३२॥
अन्यान्परिवदन्साधुर्यथा हि परितप्यते । तथा परिवदनन्यां
स्तुष्टो भवति दुर्जनः ॥ ३३ ॥ पापः कण्ठगतप्राणोऽप्य

भिनन्दति पापिनम् । द्रोणिं प्रस्तुतचालघ्नं पांसुभुक्कुरुगादिव ॥३४॥ स्तोकेनोन्नतिमायाति स्तोकेनायात्यधो गतिम् । अहो सुसदृशी चेष्टा तुलायष्टेः खलस्य च ॥ ३५ ॥ निष्णातोऽपि च वेदान्ते वैराग्यं नैति दुर्जनः । चिरं जलनिधौ मग्नः पाषाण इव मार्दवम् ॥३६॥ येषां प्राणिवधः क्रीडा नर्ममर्मच्छिदो गिरः । कार्यं परोपतापित्वं ते मृत्योरपि मृत्यवः ॥ ३७ ॥ यथा परोपकारेषु नित्यं जागर्ति सज्जनः । तथा परापकारेषु जागर्ति सततं खलः ॥ ३८ ॥ प्रायः परोपतापाय दुर्जनः सततोद्यतः । अवश्यकरणीयत्वान्न कारणमपेक्षते ॥ ३९ ॥ अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः । शीलमेतदसाधूनामभ्रं पारिप्लवं यथा ॥ ४० ॥ मृद्घटवत्सुखभेद्यो दुःसन्धानश्च दुर्जनो भवति । सुजनस्तु कनकघटवद्दुर्भेद्यश्चाशु सन्धेयः ॥ ४१ ॥ उपकारिणि विश्रब्धे शुद्धमतौ यः समाचरति पापम् । तं जनमसत्यसन्धं भगवति वसुधे कथं वहसि ॥४२ ॥ परिशुद्धामपि वृत्तिं समाश्रितो दुर्जनः परान्व्यथते । पवनाशिनोऽपि भुजगाः परपरितापं न मुञ्चन्ति ॥ ४३ ॥ पिशुनत्वमेव विद्या परदूषणमेव भूषणं येषाम् । परदुःखमेव सौख्यं शिव शिव ते केन वेधसा सृष्टाः ॥ ४४ ॥ मृगमीनसज्जनानां तृणजलसन्तोषविहितवृत्तीनाम् । लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥ ४५ ॥ परवादे दशवदनः पररन्ध्रनिरीक्षणे सहस्राक्षः । सद्वृत्तवित्तहरणे

ऽपराधं जन्मैव यथा वृथा भवति ॥ ५७ ॥ परितोषयिता न कश्चन स्वगतो यस्य गुणोऽस्ति देहिनः । परदोषकथाभिरल्पकः स्वजनं तोषयितुं किलेच्छति ॥ ५८ ॥ नलिकागतमपि कुटिलं न भवति सरलं शुनः पुच्छम् । तद्वत्खलजनहृदयं बोधितमपि नैव याति माधुर्यम् ॥५९॥ उपकारपरः स्वभावतः सततं सर्वजनस्य सज्जनः । असतामनिशं तथाप्यहो गुरुहृद्रोगकरी तदुन्नतिः ॥६०॥ अपि वेत्ति षडक्षराणि चेदुपदेष्टुं शितिकण्ठमिच्छति । वमनाशनमात्रमस्ति चेद्वनदादप्यतिरिच्यते खलः ॥६१॥ अहमेव गुरुः सुदारुणानामिति हालाहल मा स्म तात दृप्यः । ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥ ६२ ॥ कर्णामृतं सूक्तिरसं विमुच्य दोषेषु यत्नः सुमहान् खलस्य । अवेक्षते केलिवनं प्रविष्टः क्रमेलकः कण्टकजालमेव ॥ ६३ ॥ न धर्मशास्त्रं पठतीति कारणं न चापि वेदाध्ययनं दुरात्मनः । स्वभाव एवात्र तथाऽतिरिच्यते यथा प्रकृत्या मधुरं गवां पयः ॥ ६४ ॥ अकरुणत्वमकारणविग्रहः परधने परयोषिति च स्पृहा । सुजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं हि दुरात्मनाम् ॥ ६५ ॥ विनिनक्ति न बुद्धिदुर्विधः स्वयमेव स्वहितं पृथग्जनः । यदुदीरितमप्यदः परैर्न विजानाति तदद्भुतं महत् ॥ ६६ ॥ विदुरेष्यदपायमात्मना परतः श्रद्दधतेऽथवा बुधाः । न परोपहितं न च स्वतः प्रमिमीतेऽनुभवादृ-

तेऽस्पृशी ॥ ६७ ॥ न दुर्जनः सज्जनतामुपैति बहुप्रकारैरपि
सेव्यमानः । भूयोऽपि सिक्तः पयसा घृतेन न निम्बवृक्षो
मधुरत्वमेति ॥६८॥ न जारजातस्य ललाटशृङ्गं कुलप्रसूतस्य
न पाणिपद्मम् । यदा यदा मुञ्चति वाक्यबाणं तदा तदा
जातिकुलप्रमाणम् ॥ ६९ ॥ बोधितोऽपि बहुसूक्तिविस्तरैः
किं खलो जगति सज्जनो भवेत् । स्नापितोऽपि बहुशो
नदीशतैर्गर्दभः किमु हयो भवेत्क्वचित् ॥७०॥ नैनं छन्दांसि
वृजिनात्तारयन्ति मायाविनं मायया वर्तमानम् । नीडं
शकुन्ता इव जातपक्षाश्छन्दांस्येनं प्रजहत्यन्तकाले ॥ ७१ ॥
निमित्तमुद्दिश्य हि यः प्रकुप्यति ध्रुवं स तस्यापगमे प्रसी-
दति । अकारणद्वेषि मनस्तु यस्य वै कथं जनस्तं परितोष-
यिष्यति ॥ ७२ ॥ तथाऽरिभिर्न व्यथते शिलीमुखैर्हतो
दिगन्ते हृदयेन दूयते । यथा खलानां कुधियां दुरुक्तिभि-
र्दिवानिशं तप्यति मर्मताडितः ॥ ७३ ॥ वज्रासिताविव
जनस्य विश्रब्धकस्य मार्गमात्रविस्मृतनिष्पापकर्मणः ।
दैवादवाप्तविभवस्य गुणद्विषोऽस्य नीचस्य गोचरगतैः
सुखमाप्यते कैः ॥ ७४ ॥ एकः खलोऽपि यदि नाम भवे-
त्सभायां मायाविकल्पानि विदुषां निखिलमपास्य । एकोऽपि
पूर्णमुदरं मधुनः पदार्थराशेश्च रेचयति हन्त न मक्षिका किम्
॥७५॥ सर्वार्पितोऽपि सुभगः पयसा न वायसस्तस्याङ्कामपि
मिहन्ति बकेन दिवः । दुष्टः परस्य परवस्तदनिष्टकारी वि

स्त्रामलेश इह नैव बुधैर्विधेयः ॥७६॥ प्राक् पादयोः पतति खादति पृष्ठमांसं कर्णे कलं किमपि रौति शनैर्विचित्रम् । छिद्रं निरूप्य सहसा प्रविशत्यशङ्कः सर्वं खलस्य चरितं मशकः करोति ॥७७॥ ते वै सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये सामान्यास्तु परोपकारनिरताः स्वार्थाविरोधेन ये । तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥७८॥ नारीणा वचनेन कर्म कुरुते दीनं वचो भाषते नालस्यं विजहाति तिग्मकिरणे मौढे समुत्तिष्ठति । किञ्चित्कापि न साहसं वितनुते देहे चिरं दूयते ना वा विदन्ति पौरुषं कुपुरुषः कोऽप्येष निर्णीयताम् ॥७९॥ कस्त्वं भद्र खलेश्वरोऽहमिह किं घोरे वने स्थीयते शार्दूलादिभिरेव हिंस्रपशुभिः खाद्योऽहमित्याशया । कस्मात्कष्टमिद त्वया व्यवसितं मद्देहमांसाशिनः प्रत्युत्पन्ननृमांसभक्षणधियस्ते घ्नन्तु सर्वान्नरान्॥८०॥

## गुरुमहिमा १९

अज्ञानतिमिरान्धानां ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ १ ॥ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ २ ॥ एते वेदोदिताः सर्वे पुरुषार्थाश्चतुर्विधाः । गुरुभक्तस्य हस्तस्था भवन्त्यत्र न संशयः ॥ ३ ॥ यः पृष्ट्वा कुरुते कार्यं प्रष्टव्यान् स्वहितान् गुरून् । न तस्य जायते

विघ्नाः कस्मिंश्चिदपि कर्मणि ॥४॥ यावन्नानुग्रहः साक्षाज्जायते परमेश्वरात् । तावन्न सद्गुरुं कश्चित्सच्छास्त्रं वाऽपि नो लभेत् ॥ ५ ॥ तस्मादध्यापनाद्योगी गरीयान् ब्रह्मदः पिता । ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥ ६ ॥ आचार्यस्त्वस्य यां जातिं विधिवद्वेदपारगः । उत्पादयति सावित्र्या सा सत्या साऽजराऽमरा ॥ ७ ॥ यावदायुर्भवेद् वन्द्या वेदान्तो गुरुरीश्वरः । आदौ ज्ञानप्रसिद्ध्यर्थं कृतज्ञत्वापनुत्तये ॥ ८ ॥ पिता ह्येव जनयति पुरुषं पुरुषर्षभ । ब्रह्म ददाति चाचार्यस्तस्मात्स गुरुरुच्यते ॥ ९ ॥ अज्ञो भवति वै बालः पिता भवति मन्त्रदः । अज्ञं हि बालमित्याहुः पितेत्येव तु मन्त्रदम् ॥ १० ॥ न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः । ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ ११ ॥ न तेन वृद्धो भवति येनास्य पलितं शिरः । यो वै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः ॥ १२ ॥ उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ १३ ॥ आचिनोति हि शास्त्रार्थमाचारे स्थापयत्यपि । स्वयमाचरते यस्मादाचार्यः परिकीर्त्यते ॥ १४ ॥ सत्यधर्मार्थवृत्तेषु प्राप्ते वेदाचारेरतस्सदा । शिष्यांश्च शिष्यादमेव वाग्बाहूदरसंयतः ॥ १५ ॥ अहिंसयैव हि भूतानां कार्यं श्रेयोऽनुशासनम् । वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता ॥१६॥ यः समः सर्वभूतेषु विरागी गतमत्सरः ।

जितेन्द्रियः शुचिर्दक्षः सदाचारसमन्वितः ॥ १७ ॥ सम-
बुद्धिः पद्मासस्तत्रापि भगवन्मयः । कर्मणा मनसा वाचा
भीतेष्वभयप्रदः ॥१८॥ सत्यं गृणाति शिष्येभ्य इत्येव यो
निरुच्यते । हितोपदेशकश्चैव गुरुशब्दार्थ एव सः ॥ १९ ॥
तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् । शाब्दे परे च
निष्णातं ब्रह्मण्युपशमाश्रयम् ॥२०॥ अत्र सर्वासु विद्यासु
कारणं गुरुरीरितः । यथा शिवस्तथैवायं पूजनीयः प्रयत्नतः
॥ २१ ॥ गुरुभ्यस्त्वासनं देयमभिवाद्याभिपूज्य च । गुरुम-
भ्यर्च्य वर्धन्ते आयुषा यशसा श्रिया ॥ २२ ॥ य आवृणो-
त्यवितथं ब्राह्मणः श्रवणावुभौ । स माता स पिता ज्ञेयस्तं न
द्रुह्येत्कदाचन ॥२३॥ नोदाहरेदस्य नाम परोक्षमपि केवलम् ।
न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम् ॥ २४ ॥ विद्या-
ऽभ्यासस्तपो ज्ञानमिन्द्रियाणां च संयमः । अहिंसा गुरुसेवा
च निःश्रेयसकरं परम् ॥ २५ ॥ अल्पं वा बहु वा यस्य
श्रुतस्योपकरोति यः । तमपीह गुरुं विद्याच्छ्रुतोपक्रियया
तया ॥ २६ ॥ तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उ-
पदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ २७ ॥ कर्णाभ्यां
शृणुयात्तद्वद्गुरुकीर्तिञ्च सर्वदा । दोषवक्तुर्यथाशक्ति कुर्या-
त्परिभवं सदा ॥२८॥ यत्रात्मनो गुरोर्निन्दा क्रियते पाप-
मोहितैः । तत्र कर्णौ पिधायैव स्थेयं शक्या गतिर्न चेत् ॥
२९ ॥ परीवादात्खरो भवति श्वा वै भवति निन्दकः । प-

त्रिबुधैः कर्तव्याः सुहृदोऽमलाः । न तरत्यापदं कश्चिद्योऽत्र मित्रविवर्जितः ॥२॥ करावित्र शरीरस्य नेत्रयोरिव पक्ष्मणी । अविचार्य प्रियं कुर्यात्तन्मित्रं मित्रमुच्यते ॥३॥ यस्य मित्रेण संभाषा यस्य मित्रेण संस्थितिः । मित्रेण सह यो भुङ्क्ते ततो नास्तीह पुण्यवान् ॥४॥ शुचित्वं त्यागिता शौर्यं सामान्यं सुखदुःखयोः । दाक्षिण्यञ्चानुरक्तिश्च सत्यता च सुहृद्गुणाः ॥ ५ ॥ स्वाभाविकन्तु यन्मित्रं भाग्येनैवाभिजायते । तदकृत्रिमसौहार्दमापत्स्वपि न मुञ्चति ॥६॥ न मातरि न दारेषु न सोदर्ये न चात्मनि । विश्वासस्तादृश पुंसां यादृङ्मित्रे स्वभावजे ॥७॥ व्याधितस्यार्थहीनस्य देशान्तरगतस्य च । नरस्य शोकदग्धस्य सुहृद्दर्शनमौषधम् ।८। किञ्चन्दनैः सकर्पूरैस्तुहिनैः किञ्च शीतलैः। सर्वे ते मित्रगात्रस्य कलां नार्हन्ति षोडशीम् ॥९॥ शोकारातिभयत्राणं प्रीतिविश्रम्भभाजनम् । केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥१०॥ कृतज्ञं धार्मिकं सत्यमक्षुद्रं दृढभक्तिकम्। जितेन्द्रियं स्थितं स्थित्यां मित्रमत्यागि चेष्यते ॥११॥ औरसं कृतसंबन्धं तथा वंशक्रमागतम् । रक्षकं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥१२॥ शीलं शौर्यमनालस्यं पाण्डित्यं मित्रसंग्रहः । अचोरहरणीयानि पञ्चैतान्यक्षयो निधिः ॥ १३ ॥ धृतिः शमो दमः शौचं कारुण्यं वागनिष्ठुरा । मित्राणाञ्चानभिद्रोहः सप्तैताः समिधः श्रियः ।१४। आकेशग्रहणान्मित्रमकार्यात्संनिवर्तयन् । अवाच्यः कस्यचिल्लोके कृतयत्नो यथाबलम् ॥१५॥ व्यसने

क्लिश्यमानं यो स्वामिनं नाभिपद्यते । अनुजीव यथाशक्ति त
मूर्खस् विदुर्बुधाः ॥ १६ ॥ आदितरांतभिये प्रीतिरेवाचन्मित्र
लक्षणम् । विपरीतम्तु योऽन्यपारेतलक्षणमेव तस्य ॥१७॥ ददाति
प्रतिगृह्णाति गुह्यमाख्याति पृच्छति । भुङ्क्ते भोजयते चैव षड्
विधं प्रीतिलक्षणम् ॥ १८ ॥ पुनरपि वनस्पस्य स्वानि कर्माणि
कुर्वत । तथापि ममवन्त्यत मित्रोदासीनशत्रव ॥१९॥ माता
मित्र पिता चेति स्वभावात्त्रितय हितम् । कार्यकारणतश्चान्ये
भवन्ति हितबुद्धयः ॥२०॥ सुहृदां हितकामानां यः शृणोति
न भाषितम् । विपत्संनिहिता तस्य स नरः शत्रुनन्दनः ॥२१॥
दीपनिर्वाणगन्धं च सुहृद्वाक्यमरुन्धतीम् । न जिघ्रन्ति
न शृण्वन्ति न पश्यन्ति गतायुषः ॥ २२ ॥ इष्टेनाद्विपुत्रो
मैत्रीं श्रीपि तत्र न कारयत । वागवादमर्थसम्बन्धं तस्यमीप
रिमापणम् ॥२३॥ सर्वथा सुकरं मित्रं दुष्करं प्रीतिपालनम् ।
अनित्यत्वात्तु चित्तानां प्रीतिरल्पेऽपि भिद्यते ॥ २४ ॥
यथा पुष्करपत्रेषु पतितास्तोयबिन्दवः । न श्लेषमभिगच्छन्ति
तथाऽनार्येषु सौहृदम् ॥ २५ ॥ परस्पर गुणवादी च
परोक्ष चापि निन्दक । स मानव मयलाक मह्योकपरायणः
॥ २६ ॥ परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥ २७ ॥ अथ क्लिष्टेषु
मूर्खेषु रौद्रसाहसिकेषु च । तथैवापेतधर्मेषु न मैत्रीमाचरेद्बुध
॥२८॥ रहस्यभेदो याञ्चा च नैष्ठुर्यं चलचित्तता । क्रोधो निःस

त्यता सूतमेतन्मित्रस्य दूषणम् ॥२९॥ मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः। ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ ।३०। सकृद्दुष्टं च मित्रं यः पुनः सन्धातुमिच्छति। स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा॥३१॥न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः। कारणेन हि जायन्ते मित्राणि रिपवस्तथा॥३२॥ कश्चित्स्वभावतो मित्रं शत्रुश्चापि स्वभावतः। भवन्ति मानदानाभ्यां शत्रवश्चाप्यवैरिणः ॥ ३३ ॥ तदेवास्य परं मित्रं यत्र संक्रामति द्वयम्। दृष्टे सुखं च दुःखं च प्रतिच्छायेव दर्पणे ॥ ३४ ॥ विद्या शौर्यं च दाक्ष्यं च बलं धैर्यं च पञ्चमम्। मित्राणि सहजान्याहुर्वर्त्तयन्ति हि तैर्बुधाः ॥३५॥ एकशीलवयोविद्याजातिव्यसनवृत्तितः । साहचर्याद्भवेन्मित्रमेभिर्यदि तु सार्जवैः ॥ ३६ ॥ दूरादवेक्षणं हासः संप्रश्नेष्वादरो भृशम्। परोक्षेऽपि गुणश्लाघा स्मरणं प्रियवस्तुषु ॥ ३७ ॥ आत्मस्त्रीधनगुह्याना शरणं समये सुहृत्। प्रोक्तोऽयमुत्तमोऽन्यश्च द्वित्रैकपदमित्रकः ॥ ३८ ॥ विवादो धनसम्बन्धो याचनं स्त्रीषु संगतिः। आदानमग्रतः स्थानं मैत्रीभङ्गस्य हेतवः ॥ ३९ ॥ मत्या परीक्ष्य मेधावी बुद्ध्या संपाद्य चासकृत्। श्रुत्वा दृष्ट्वाऽथ विज्ञाय प्राज्ञैर्मैत्रीं समाचरेत् ॥४०॥ स राघवेन्द्रो हृतराज्यदारः स वानरेन्द्रो हृतराज्यदारः। एवं तयोरध्वनि दैवयोगात्समानशीलव्यसनेषु सख्यम् ॥४१॥ मृगा मृगैः सङ्गमनुव्रजन्ति गावश्च गोभिस्तुरगास्तुरङ्गैः।मूर्खाश्च मूर्खैः सुधियः सुधीभिः समानशील-

व्यसनेषु लक्षणम् ॥५२॥ आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात् । दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खलसज्जनानाम् ॥ ५३ ॥ मुखं प्रसन्नं विमला च दृष्टिः कथाऽनुरागो मधुरा च वाणी । स्नेहोऽधिकः सम्भ्रमदर्शनञ्च सदाऽनुरक्तस्य जनस्य लक्ष्म ॥ ५४ ॥ आराद्विराम कृतपूर्वनाशनमपमानम् दुश्चरितानुकीर्तनम् । कथाप्रसङ्गेन च नामविस्मृतिर्विरक्तभावस्य जनस्य लक्षणम् ॥ ५५ ॥ उत्तम मध्यमनिकृष्टजनेषु मैत्री यावद् शिलासु सिकतासु जलेषु रेखा । वैरं पुनस्तद्विपरीतमुत्तममध्यमसज्जनानां यावद् शिलासु सिकतासु जलेषु रेखा ॥ ५६ ॥ पापान्निवारयति योजयते हिताय गुह्यानि गूहति गुणान्प्रकटीकरोति । आपद्गतञ्च न जहाति ददाति काले सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ ५७ ॥ यः प्रीणयेत्सुचरितैः पितरं स पुत्रो यद्भर्तुरेव हितमिच्छति तत्कलत्रम् । तन्मित्रमापदि सुखे च समक्रियं यदेतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ ५८ ॥ मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः पात्रं यत्सुखदुःखयोः सह भवेन्मित्रेण तद्दुर्लभम् । ये चान्ये सुहृदः समृद्धिसमये द्रव्याभिलाषाकुलास्ते सर्वत्र मिलन्ति तत्त्वनिकषग्रावा तु तेषां विपत् ॥ ५९ ॥ क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः क्षीरे तापमवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः । गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा मित्रापदं युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥ ६० ॥

शतेषु जायते शूरः सहस्रेषु च पण्डितः । वक्ता दशसहस्रेषु दाता भवति वा न वा ॥ १ ॥ दाता नीचोऽपि सेव्यः स्यान्निष्फलो न महानपि । जलार्थी वारिधिं त्यक्त्वा पश्य कूपं निषेवते ॥ २ ॥ अयं निजः परो वेति गणना लघुचेतसाम् । उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥ ३ ॥ याचितो यः प्रहृष्येत दत्त्वा च प्रीतिमान्भवेत् । तं दृष्ट्वाऽप्यथवा श्रुत्वा नरः पुण्यमवाप्नुयात् ॥ ४ ॥ कर्णस्त्वचं शिबिर्मांसं जीवं जीमूतवाहनः । ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम् ॥ ५ ॥ शुध्यन्ते पक्षिपशवः पठन्ति शुकसारिकाः । दातुं शक्नोति यो वित्तं स शूरः स च पण्डितः ॥६॥ रक्षन्ति कृपणाः पाणौ द्रव्यं प्राणमिवात्मनः । तदेव सन्तः सततमुत्सृजन्ति यथा मलं ॥ ७ ॥ दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति । अदाता हि धनत्यागी धनं हित्वा हि गच्छति ॥ ८ ॥ निजसौख्यं निरुन्धानो यो धनार्जनमिच्छति । परार्थं भारवाहीव क्लेशस्यैव हि भाजनम् ॥ ९ ॥ त्यागभोगविहीनेन धनेन धनिनो यदि । भवामः किन्न तेनैव धनेन धनिनो वयम् ॥ १० ॥ दानोपभोगरहिता दिवसा यस्य यान्ति वै । स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥११॥ लुब्धो न विसृजत्यर्थं नरो दारिद्र्यशङ्कया । दातापि विसृजत्यर्थं तयैव ननु शङ्कया ॥१२॥ यद्धोऽधः

क्षितौ विषं मिषस्तान मितम्पचः । तद्धा निरय गन्तु चक्रे
पन्थानमग्रतः ॥ १३ ॥ किंपाके किं शुकः कुर्यात्फलितेऽपि
बुभुक्षितः । महाधारे समृद्धेऽपि किं कुर्युरुपजीविनः ॥१४॥
उपभोगकातराणां पुरुषाणामर्थसञ्चयपराणाम् । कन्या
मणिरिव सदने तिष्ठत्यर्थः परस्यार्थे ॥ १५ ॥ ग्रासग्रासमपि न
समश्नन्ति भोगान् भोक्तुं स्वकर्मभिः कृपणाः । सुरसपाकः ।
किल भवति द्राक्षापाके बलिभुजां हि ॥ १६ ॥ दैववशादु
त्पन्ने सति विभवे यस्य नास्ति भोगेच्छा । न च परलोक
समीहा स भवति धनपालको मूर्खः ॥ १७ ॥ अतिसाहस
मतिदुष्करमत्याश्चर्यं च दानमर्थानाम् । योऽपि ददाति शरीरं
न ददाति स वित्तलेशमपि ॥ १८ ॥ मा धनानि कृपणः
खलु जीवतृष्णयाऽर्पयतु जातु परस्मै । तत्र नैष कुरुते
मम चित्रं यत्तु नार्पयति तानि मृतोऽपि ॥ १९ ॥ यदेव
साधूनामुपरि विमुखाः सन्ति धनिनो न चैषामेतेषामपि
तु निमित्तं च्छन्दमधमम् । अतः खेदो नास्मिन्परमनुकम्पैव
भवति स्वमांसच्छेदेभ्यः क इह हरिणकेभ्यः परिभवः ॥ २० ॥

## सत्सङ्ग २२

साधुसङ्गतयो लोके सन्मार्गस्य च दीपिकाः । हार्दा
न्धकारहारिण्यो भासो ज्ञानविवस्वतः ॥ १ ॥ मोक्षद्वारस्य
योनिर्हि सुरेव समागमः । महत्त्वपदनि प्रशस्य योनिः साधु
समागमः ॥ २ ॥ महाजनस्य संसर्गः कस्य नोन्नतिकारकः ।

पद्मपत्रस्थितं वारि धत्ते मुक्ताफलश्रियम् ॥ ३ ॥ मलयाचल-गन्धेन त्विन्धनञ्चन्दनायते । तथा सज्जनसङ्गेन दुर्जनः सज्जनायते ॥ ४ ॥ करोति निर्मलाधारस्तुच्छस्यापि महार्घताम् । अम्बुनो बिन्दुरल्पोऽपि शुक्तौ मुक्ताफलं भवेत् ॥ ५ ॥ हीयते हि मतिस्तात हीनैः सह समागमात् । समैश्च समतामेति विशिष्टैश्च विशिष्टताम् ॥ ६ ॥ काचः काञ्चनसंसर्गाद्धत्ते मारकतीर्द्युतीः । तथा सत्संनिधानेन मूर्खो याति प्रवीणताम् ॥ ७ ॥ संभाषा दर्शनं स्पर्शः कीर्तनं स्मरणं तथा । पावनानि किलैतानि साधूनामिति शुश्रुम ॥ ८ ॥ शून्यमापूर्णतामेति मृत्युरप्यमृतायते । आपत्संपदिवाभाति विद्वज्जनसमागमात् ॥ ९ ॥ यदि सत्सङ्गनिरतो भविष्यसि भविष्यसि । अथ दुर्जनसंसर्गे पतिष्यसि पतिष्यसि ॥ १० ॥ सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते । स सद्भिः सह कर्तव्यः सतां सङ्गो हि भेषजम् ॥ ११ ॥ क्षुद्रोऽपि तनुते तात तेजस्तेजस्विसङ्गतः । अर्कसम्पर्कतः पश्य दर्पणे दहनद्युतिम् ॥ १२ ॥ सन्तः सदैव गन्तव्या यद्यप्युपदिशन्ति न । या हि स्वैरकथास्तेषामुपदेशा भवन्ति ताः ॥ १३ ॥ अनपेक्षं मुनिं शान्तं निर्वैरं समदर्शिनम् । अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः ॥ १४ ॥ यथोपश्रयमाणस्य भगवन्तं विभावसुम् । शीतं भयं तमोऽप्येति साधून्संसेवतस्तथा ॥ १५ ॥ निमज्ज्योन्मज्जतां घोरे भवाब्धौ परमायनम् । सन्तो

ब्रह्मविदः प्राप्ता नौरिव मज्जताम् ॥१६॥ सज्जनसङ्गो मा भूद्यदि सङ्गो माऽस्तु तत्पुनः स्नेहः । स्नेहो यदि मा विरहो यदि विरहो माऽस्तु जीवितस्याशा ॥१७॥ वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः । नहि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ॥ १८ ॥ रे जीव सत्सङ्गमवाप्नुहि त्वमसत्सङ्गं सर्वथा विहाय । धन्योऽपि निन्द्यो भवति कुसङ्गादम्बुदबिन्दुर्विषधरास्ये ॥ १९ ॥ अपारसंसारपयोधिमध्ये निमज्जतां मज्जितदारहेतवे । महात्मभिः सङ्गतिरेव साध्या साध्यस्त्वनुपायविधानुपायः ॥ २० ॥ सुजनः सुजनेन सङ्गतः परिपुष्णाति मतिं शनैः शनैः । परिपुष्टमतिर्विवेकवाञ्जनदोषगुणं विमुञ्चति ॥२१॥ महरमतां हारमादुर्विमुक्तस्तमन्दार योषितां साङ्गमङ्गम् । महान्तस्ते समधियाः महात्मा विमत्सराः सुहृदः साधवो ये ॥ २२ ॥ सत्सङ्गाद्भवति हि साधुता खलानां साधूनां नहि खलसङ्गमात्खलत्वम् । आमोदं कुसुमभवं मृदेव धत्ते मृद्गन्धं नहि कुसुमानि धारयन्ति ॥ २३ ॥ किं वा परेण बहुना परिभाषितेन सङ्गतिरेव सतां महते फलाय । अम्भोनिधेस्तटरुहास्तरवोऽपि येन वेलाजलाञ्चितरत्नकृतालवालाः ॥ २४ ॥ जाड्यं धियो हरति सिञ्चति वाचि सत्यं मानोन्नतिं दिशति पापमपाकरोति । चेतः प्रसादयति दिक्षु तनोति कीर्तिं सत्सङ्गतिः कथय किं न करोति पुंसाम् ॥२५॥

दूरीकरोति कुमतिं विमलीकरोति चेतश्चिरन्तनमघं चुलुकीकरोति। भूतेषु किं च करुणां बहुलीकरोति सङ्गः सतां किमु न मङ्गलमातनोति ॥ ६ ॥ कान्तारभूमिरुहमौलिनिवासशीलाः प्रायः पलायनपरा जनवीक्षणेन। कूजन्ति तेऽपि हि शुकाः खलु रामनाम सङ्गः स्वभावपरिवर्तविधौ निदानम् ॥७॥ भाग्योदयेन बहुजन्मसमार्जितेन सत्सङ्गमं च लभते पुरुषो यदा वै। अज्ञानहेतुकृतमोहमदान्धकारनाशं विधाय हि तदोदयते विवेकः ॥८॥ एके केचिद्यतिकरगताः पात्रसंज्ञां लभन्ते गायन्त्यन्ये सरसमधुरं वीणया संप्रयुक्ताः। एके तथा सहगतिवशाद्दुस्तरं तारयन्ति केचिच्चैषां ज्वलितहृदया रक्तमेवापिबन्ति ॥९॥ सन्तप्तायसि संस्थितस्य पयसो नामापि न श्रूयते मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते। स्वात्यां सागरशुक्तिसंपुटगतं तज्जायते मौक्तिकं प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते ॥ १० ॥

## असत्सङ्गाद्धानिः २३

अहो दुर्जनसंसर्गान्मानहानिः पदे पदे। पावको लोहसङ्गेन मुद्गरैरभिहन्यते ॥ १ ॥ असतां सङ्गदोषेण साधवो यान्ति विक्रियाम्। दुर्योधनप्रसङ्गेन भीष्मो गोहरणे गतः ॥२॥ न स्थातव्यं न गन्तव्यं क्षणमप्यधमैः सह। पयोऽपि शौण्डिकीहस्ते मदिरां मन्यते जनः ॥ ३ ॥ बुद्धिश्च क्षीयते पुंसां नीचैः सह समागमात्। मध्यमैर्मध्यतां याति श्रेष्ठतां

गुणयुक्तो दरिद्रोऽपि नेश्वरैरगुणैः समः ॥६॥ गुणेषु क्रियतां यत्नः किमाटोपैः प्रयोजनम् । विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥७॥ गुणैर्गौरवमायाति नोच्चैरासनमास्थितः । प्रासादशिखरस्थोऽपि काकः किं गरुडायते ॥ ८ ॥ गुणैः सर्वज्ञकल्पोऽपि सीदत्येको निराश्रयः । अनर्घमपि माणिक्यं हेमाश्रयमपेक्षते ॥ ९ ॥ गुणेन स्पृहणीयः स्यान्न रूपेण युतो जनः । सौगन्ध्यवर्ज्यं नादेयं पुष्पं कान्तमपि क्वचित् ॥१०॥ गुणिनोऽपि हि सीदन्ति गुणग्राही न चेदिह । सगुणः पूर्णकुम्भोऽपि कूप एव निमज्जति ॥११॥ न पुत्रत्वेन पूज्यन्ते गुणैरासाद्यते पदम् । रवेर्ध्वान्तापहं दत्ते प्रदीपो न पुनः शशी ॥ १२ ॥ गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः । वासुदेवं नमस्यन्ति वसुदेवं न मानवाः ॥ १३ ॥ गुणानर्चन्ति जन्तूनां न जातिं केवलां क्वचित् । स्फाटिकं भाजनं भग्नं काकिण्याऽपि न गृह्यते ॥१४॥ नागुणी गुणिनं वेत्ति गुणी गुणिषु मत्सरी । गुणी च गुणरागी च विरलः सरलो जनः ॥ १५ ॥ गुणानामन्तरं प्रायस्तज्ज्ञो जानाति नेतरः मालतीमल्लिकामोदं घ्राणं वेत्ति न लोचनम् ॥ १६ ॥ न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः । देहिनां गुणदोषाः स्युर्मित्राणि रिपवस्तथा ॥१७॥ संस्थितस्य गुणोत्कर्षः प्रायः प्रस्फुरति स्फुटम् । दग्धस्यागुरुखण्डस्य स्फारीभवति सौरभम् ॥१८॥ बुधाग्रे न गुणान्

न वेत्ति निर्बलः । मधोर्गुणं वेत्ति पिको न वायसः करी च सिंहस्य बलं न मूषकः ॥ ३० ॥

## वाङ्माधुर्यम् २५

यस्य वाण्यस्ति मधुरा तस्यैव सफलं तपः । नो चेज्जीवन्ति पशवोऽप्यनिशं पुष्टिशालिनः ॥ १ ॥ ये प्रियाणि प्रभाषन्ते प्रियमिच्छन्ति सत्कृतम् । श्रीमन्तो वन्द्यचरिता देवास्ते नरविग्रहः ॥ २ ॥ नहीदृशं संवननं त्रिषु लोकेषु किञ्चन । दया मैत्री च भूतेषु दानञ्च मधुरा च वाक् ॥३॥ भार्या पुत्रोऽप्युद्विजेत कटुवाक्यात्मदण्डतः । पशवोऽपि वशं यान्ति दानैश्च मृदुभाषणैः ॥ ४ ॥ प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः । तस्मात्तदेव वक्तव्यं वचने का दरिद्रता ॥ ५ ॥ को हि भारः समर्थानां किं दूरं व्यवसायिनाम् । को विदेशः सुविद्यानां कः परः प्रियवादिनाम् ॥६॥ प्रियमेवाभिधातव्यं नित्यं सत्सु द्विषत्सु वा । शिखीव केका मधुरा वाचं ब्रूते जनप्रियः ॥ ७ ॥ मदरक्तस्य हंसस्य कोकिलस्य शिखण्डिनः । हरन्ति न तथा वाचो यथा वाचो विपश्चिताम् ॥ ८ ॥ अभ्यावहति कल्याणं विविधं वाक् सुभाषिता । सैव दुर्भाषिता राजन्ननर्थायोपपद्यते ॥ ९ ॥ वाक्संयमो हि नृपते सुदुष्करतमो मतः । अर्थवच्च विचित्रञ्च न शक्यं बहु भाषितुम् ॥१०॥ तास्तु वाचः सभायोग्या याश्चित्ताकर्षणक्षमाः । स्वेषां परेषां विदुषां द्विषामविदुषामपि ॥११॥

धर्मो धर्मो नयो हास्यं मनोहारि सुभाषितम् । इत्यादि
गुणरत्नानां संपदी मानसीवृत्ति ॥ १२ ॥ वशीकर्तुमपि वशी
कर्तुं समदेकेन कर्मणा । परापवादसस्येभ्यो गां चरन्तीं
निवारय ॥ १३ ॥ सम्पोषितमपि जिह्वाऽग्रे जिह्वाग्रे मित्र
बान्धवाः । जिह्वाग्रे बन्धनं प्राप्तं जिह्वाग्रे मरणं ध्रुवम् ॥१४॥
हृदि विद्ध इवात्यर्थं यया सन्तप्यते जनः । पीडितोऽपि हि
मेधावी न तां वाचमुदीरयेत् ॥ १५ ॥ रोहते सायकैर्विद्धं
वनं परशुना हतम् । वाचा दुरुक्तया विद्धं न संरोहति वाक्
क्षतम् ॥१६॥ वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति
रात्र्यहानि । परस्य नामर्मसु ते पतन्ति तान्पण्डितो नाव
सृजेत्परेभ्यः ॥१७॥ वाग्धारापुष्पाम्यवर्षति विपरस वाक्या
हन्याशापकाराऽपि नष्टः । किन्त्वहृद्यं कोकिलेनोपनीतं
को वा लोके मदयन्त्यापराधः ॥ १८ ॥ कायाम्बुधे मित्र
रूपस्यरस्यां कीर्ति सुते दुष्कृतं या हिनस्ति । तां वाचमेवा
मान्तरं मङ्गलानां धेनुं धीराः सूनृतां वाचमाहुः ॥ १९ ॥
निष्कल्पापि सुभाषितेन रमते लीनं मनः सर्वदा श्रुत्वाऽ
न्यस्य सुभाषितं खलु मनः श्रोतुं पुनर्वाञ्छति । अज्ञान्
ज्ञानवतोऽप्यनेन हि वशीकर्तुं समर्थो भवस्तस्मात् हि सुभा
षितस्य मनुजैरावश्यकः संग्रहः ॥ २० ॥

## ऐक्यम् २५

समानी प्रपा सह वो अन्नभागः समाने योक्त्रे सह वो
युनज्मि । सम्यञ्चोऽग्निं सपर्यतारा नाभिमिवाभितः ॥ १ ॥

मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा। सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया ॥ २ ॥ सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्। देवा भागं यथा पूर्वे संजानाना उपासते ॥ ३ ॥ समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम्। समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषः जुहोमि ॥ ४ ॥ संहतत्वाद्यथा वेणुर्निविडः कण्टकैर्वृतः। न शक्यते समुच्छेत्तुं भ्रातृसङ्घातवांस्तथा ॥ ५ ॥ वयं पञ्च वयं पञ्च वयं पञ्च शतं च ते। अन्यैः सह विवादे तु वयं पञ्च शतं च वै ॥६॥ अल्पानामपि वस्तूनां संहतिः कार्यसाधिका। तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥ ७ बहूनां चैव सत्वानां समवायो रिपुञ्जयः। वर्षधाराधरो मेघस्तृणैरपि निवार्यते ॥ ८ ॥ संहतिः श्रेयसी पुंसां स्वकुलैरल्पकैरपि। तुषेणापि परित्यक्ता न प्ररोहन्ति तण्डुलाः ॥ ९ ॥ अन्योन्यैक्यप्रभावेन पाण्डवानां जयः किल। विनष्टाः कौरवाः सर्वे तदभावान्न संशयः ॥ १० ॥ भूमिजलाग्निवायुनामणवो मिलिता यदि। साधयन्ति स्वकं कार्यं न भिन्नाः कार्यसाधकाः ॥ ११ ॥ एकस्मिन्पक्षिणि काके यदा विज्ञायते विपद्। ते काका मिलिताः सन्तो यतन्ते तन्निवृत्तये ॥ १२ ॥ वानराणां यथा दृष्टा ह्यन्योन्यस्य सहायता। मनुष्यैरपि कर्तव्या न विरोधः कदाचन ॥ १३ ॥ सर्वथासंहतैरेव दुर्बलैर्बलवानपि। अमित्रः शक्यते हन्तुं मधुहा

सुवृत्तास्तारयन्तीह दुर्वृत्ता मज्जयन्ति च ॥ २७ ॥ यत्रा-स्मीयो जनो नास्ति भेदस्तत्र न विद्यते । कुठारे दण्डनिर्मुक्ते भिद्यन्ते तरवः कथम् ॥ २८॥ कुठारमालिकां दृष्ट्वा कम्पिताः सकला द्रुमाः । वृद्धस्तरुराहेदं स्वजातिर्नैव दृश्यते ॥२९॥ ज्ञातिभिर्विग्रहस्तत्र न कर्तव्यः शुभार्थिना । सुखानि सह भोज्यानि ज्ञातिभिर्यस्तथैव ॥ ३० ॥ न वै भिन्ना जातु चरन्ति धर्मं न वै सुखं प्राप्नुवन्तीह भिन्नाः । न वै भिन्ना गौरवं प्राप्नुवन्ति न वै भिन्नाः प्रशमं रोचयन्ति ॥ ३१ ॥

## धनगुणाः २७

ईशा वास्यमिदꣳसर्वं यत्किञ्च जगत्यां जगत् ।

तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥ यजुः

धनवान्बलवाँल्लोके सर्वः सर्वत्र सर्वदा । प्रभुत्वं धनमूलं हि राज्ञामप्युपजायते ॥ १ ॥ नहि तद्विद्यते किञ्चिद्यदर्थेन न सिध्यति । यत्नेन मतिमांस्तस्मादर्थमेकं प्रसाधयेत् ॥ २ ॥ वयोवृद्धास्तपोवृद्धा ये च वृद्धा बहुश्रुताः । सर्वे ते धनवृद्धानां द्वारि तिष्ठन्ति किङ्कराः ॥३॥ यस्यार्थास्तस्य मित्राणि यस्या-र्थास्तस्य बान्धवाः । यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ॥ ४ ॥ संसारे व्यवहाराय सारभूतं धनं स्मृतम् । अतो यतेत तत्प्राप्त्यै नरो ह्युपायसाहसैः ॥ ५ ॥ पूज्यते यदपूज्योऽपि यदगम्योऽपि गम्यते । वन्द्यते यदव-न्द्योऽपि स प्रभावो धनस्य च ॥ ६ ॥ अशनादिन्द्रियाणीव स्युः कार्याण्यखिलान्यपि । एतस्मात्कारणाद्वित्तं सर्वसाधन-

पूज्यते ॥ ७ ॥ महाप्राज्ञोऽपि नरः पूज्यो यस्यास्ति विपुलं
धनम् । धनिना तुल्यवयोऽपि निर्धनः परिभूयते ॥ ८ ॥
धन लभस्व काकुत्स्थ धनमूलमिदं जगत् । अन्तरं नैव
पश्यामि निर्धनस्य मृतस्य च ॥ ९ ॥ न नरस्य नरो दासो
दासस्त्वर्थस्य भूपते । गौरवं लाघवं वाऽपि धनाधननिबन्धनम्
॥ १० ॥ अर्थस्य पुरुषा दासा दासस्त्वर्थो न कस्यचित् ।
अतोऽर्थाय यतेतैव सर्वदा यत्नमास्थितः ॥ ११ ॥ स्वामि
त्वञ्चैव दातृत्वं धनिकस्य तपःफलम् । एनसः फलमर्थित्वं
दास्यत्वञ्च दरिद्रता ॥ १२ ॥ धनमाहुः परं धर्मं धने सर्वं
प्रतिष्ठितम् । जीवन्ति धनिनो लोके मृता ये त्वधना नराः
॥ १३ ॥ इह लोके हि धनिनां परोऽपि स्वजनायते ।
स्वजनोऽपि दरिद्राणां सर्वदा दुर्जनायते ॥ १४ ॥ आस्ते
यावत्तु सधनस्तावत्सर्वैस्तु सेव्यते । निर्धनस्त्यज्यते भार्या
पुत्राद्यैः सगुणोऽप्यतः ॥ १५ ॥ धर्माय यशसेऽर्थाय आत्मने
स्वजनाय च । पञ्चधा विभजन्वित्तमिहामुत्र च मोदते ॥
१६ ॥ धनी भोगान्समाप्नोति धनी स्वर्गं च गच्छति ।
विपुलाञ्च तथा कीर्तिं गुणाख्यानाभिधानपि ॥ १७ ॥ अर्थस्य
पुरुषो दासो दासस्त्वर्थो न कस्यचित् । इति सत्यं महाराज
बद्धोऽस्म्यर्थेन कौरवैः ॥ १८ ॥ अर्थेभ्यो हि विवृद्धेभ्यः
संभृतेभ्यस्ततस्ततः । क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः
॥ १९ ॥ अर्थाद्धर्मश्च कामश्च स्वर्गश्चैव नराधिप । प्राण

यात्राऽपि लोकस्य विना ह्यर्थं न सिध्यति ॥ २० ॥ अर्थेन च विहीनस्य पुरुषस्याल्पमेधसः । विछिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ २१ ॥ यः कृशार्थः कृशगवः कृशभृत्यः कृशातिथिः । स वै राजन्कृशो नाम न शरीरकृशः कृशः ॥२२॥ अध्येतव्या त्रयी नित्यं भवितव्य विपश्चिता । सर्वथा धनमाहार्यं यष्टव्यञ्चापि यत्नतः ॥२३॥ धनादिविरहेणैव न स्वर्गो लभ्यते क्वचित् । नेमे मृगाः स्वर्गजितो न वराहा न पक्षिणः ॥ २४ ॥ अधनं दुर्बल माहुर्धनेन बलवान्भवेत् । सर्वं धनवता प्राप्य सर्वं तरति कोशवान् ॥ २५ ॥ सुनिर्धनत्वं प्राप्यैके मरणं भेजिरे जनाः । ग्रामायैकेऽचलायैके नाशायैके प्रवव्रजुः ॥ २६ ॥ उन्मादमेके पुष्यन्ति यान्त्यन्ये द्विषतां वशम् । दास्यमेके च गच्छन्ति परेषामर्थहेतुना ॥२७ ॥ लज्जन्ते बान्धवास्तेन सबन्धं गोपयन्ति च । मित्राण्यमित्रतां यान्ति यस्य न स्युः कपर्दकाः ॥२८॥ दरिद्रं दुःखमपन्नं पापिनं प्रवदन्त्यतः । श्रीमन्तं सुखसंपन्नं पुण्यात्मानञ्च लौकिकाः ॥ २९ ॥ निर्धनं सर्व एवैते श्वसन्त पुरतः स्थितम् । अवजानन्ति मित्राद्या मानवा धनगर्विताः ॥ ३० ॥ कुलं शीलं तथा विद्या गुणा नानाविधा अपि । निर्धनस्य न कार्याय क्षमन्ते शववत्स्थिताः ॥ ३१ ॥ दारिद्र्यान्मरणाद्वा मरणं संरोचते न दारिद्र्यम् । अल्पक्लेश मरणं दारिद्र्यमनन्तकं दुःखम् ॥ ३२ ॥ हेतुप्रमाणयुक्तं वाक्यं न श्रूयते दरिद्रस्य ।

धनेभ्यः परो बान्धवो नास्ति लोके धनान्यर्जयध्वं धनान्यर्जयध्वम् ॥ ४३ ॥ वरं वनं व्याघ्रगजेन्द्रसेवितं द्रुमालयः पत्रफलाम्बुभोजनम् । तृणानि शय्या वसनं च वल्कलं न बन्धुमध्ये धनहीनजीवनम् ॥ ४४ ॥ यदा तु भाग्यक्षयपीडितां दशां नरः कृतान्तोपहितां प्रपद्यते । तदाऽस्य मित्राण्यपि यान्त्यमित्रतां चिरानुरक्तोऽपि विरज्यते जनः ॥ ४५ ॥ वाणी दरिद्रस्य शुभा हिताऽपि ह्यर्थेन शब्देन च संप्रयुक्ता । न शोभते वित्तवतः समीपे भेरीनिनादे पठितेव वीणा ॥ ४६ ॥ तानीन्द्रियाण्यविकलानि मनस्तदेव सा बुद्धिरप्रतिहता वचनं तदेव । अर्थोष्मणा विरहितः पुरुषः स एव ह्यन्यः क्षणेन भवतीति विचित्रमेतत् ॥ ४७ ॥ माता निन्दति नाभिनन्दति पिता भ्राता न संभाषते । भृत्यः कुप्यति नानुगच्छति सुतः कान्ता च नालिङ्गते । अर्थप्रार्थनशङ्कया न कुरुते संभाषणं वै सुहृत् तस्माद्द्रव्यमुपार्जय शृणु सखे द्रव्येण सर्वे वशाः ॥ ४८ ॥ पद्मे मूढजने ददासि द्रविणं विद्वत्सु किं मत्सरो नाहं मत्सरिणी न चापि चपला नैवास्ति मूर्खे रतिः । मूर्खेभ्यो द्रविणं ददामि नितरां तत्कारणं श्रूयतां विद्वान्सर्वगुणेषु पूजिततनुर्मूर्खस्य नान्या गतिः ॥ ४९ ॥ आलस्यं स्थिरतामुपैति भजते चापल्यमुद्योगितां मूकत्वं मितभाषितां वितनुते मौढ्यं भवेदार्जवम् । पात्रापात्रविचारणाविरहिता यच्छत्युदारात्मतां मातर्लक्ष्मि तव प्रसादवशतो दोषा अमी स्युर्गुणाः ॥ ५० ॥

दृश्यन्ते श्वभिः श्वानो यथा भुवि ॥ १३ ॥ चित्ते व्याकुलता तेषां कर्तव्यासक्तचेतसाम् । वर्तते नैव गच्छन्ति यथा ते सुखमण्वपि ॥ १४ ॥ अवजानन्ति धनिनो देवान् राज्ञो गुरूनपि । अतिथीन् ब्राह्मणांश्चैव वेदवेदाङ्गपारगान् ॥ १५ ॥ दुःखान्यपि बहून्येते गच्छन्त्यचिरेण जनाः । स्वपक्षे परपक्षे च भूतोपद्रवकारकाः ॥ १६ ॥ इत्यादिकं धनी दुःखमाप्नुयान्निर्धनो न तत् । शक्त्यभावेन मैत्रेयि धनिनो निर्धनो वरः ॥ १७ ॥ धनिनां जीवितं यादृक् तादृगेव तवापि च । धनलाभाद्धि मैत्रेयि भविष्यति न संशयः ॥ १८ ॥ वित्तासक्तेषु पतिषु चलचित्तेषु सर्वदा । अमृतत्वस्य नैवाशा यथा तेऽपि तथैव सा ॥ १९ ॥ द्रव्येण जायते कामः क्रोधो द्रव्येण जायते । द्रव्येण जायते लोभो मोहो द्रव्येण जायते ॥ ॥ २० ॥ अन्नं यावत्प्रियाऽऽदद्यादद्मि तावदहं स्वयम् । दरिद्र इति सञ्चिन्त्य स्त्रीमुखं न विलोकयेत् ॥ २१ ॥ दरिद्रं पुरुषं दृष्ट्वा नार्यः कामातुरा अपि । स्प्रष्टुं नेच्छन्ति कुणपं यद्वत्कामिविदूषितम् ॥ २२ ॥ दरिद्रः कासुचित्कामं न कुर्याज्जननीष्विव । अन्नमेकं विहायायं किञ्चिन्नेच्छति कर्हिचित् ॥ २३ ॥ विवेकीव दरिद्रोऽयं कोपं न कुरुते क्वचित् । राजादिभयतो नित्यं यमराजभयात्तथा ॥ २४ ॥ पुरा कृतानां पापानां फलमेतत्समागतम् । दारिद्र्यन्नाम

परदारान्परद्रव्यं

समर्थः श्रीमदान्धोऽयं राजानं देवतां गुरुम् । अवजानाति सहसा स्वात्मनो बलमाश्रितः ॥ ३९ ॥ असह्यं दुःखमाप्नोति लोकद्वयभयङ्करम् । कीर्तिहानिञ्च धिग्वादं सद्यो गच्छति मोहितः ॥ ४० ॥ लोभश्चास्मिन्नसमर्थे स्याद्व मदृशो जातवेदसा । यावद्यावदवाप्नोति ततो भूयःस इच्छति ४१ ॥ समर्थः स्वात्मलोभेन परदारधनादिकम् । हृत्वा चोपहसत्यन्यान्सर्वशोच्यो नराधमः ॥ ४२ ॥ अर्थार्थी यानि कष्टानि मूढोऽयं सहते जनः । शतांशेनापि मोक्षार्थी तानि चेन्मोक्षमाप्नुयात् ॥ ४३ ॥ येऽर्था धर्मेण ते सत्या येऽधर्मेण धिगस्तु तान् । धर्मं वै शाश्वतं लोके न जह्याद्धनकांक्षया ॥ ४४ ॥ जनयन्त्यर्जने दुःखं तापयन्ति विपत्तिषु । मोहयन्ति च सम्पत्तौ कथमर्थाः सुखावहाः ॥ ४५ ॥ मातरं पितरं पुत्रान्ब्राह्मणांश्च बहुश्रुतान् । कर्मणा मनसा वाचा समर्थो हन्ति मोहितः ॥ ४६ ॥ यदर्ज्यते परिक्लेशैरर्जितं यन्न भुज्यते । विभज्यते यदन्तेऽन्यैः कस्यचिन्माऽस्तु तद्धनम् ॥ ४७ ॥ मृत्युः शरीरगोप्तारं वसुरक्षं वसुन्धरा । दुश्चारिणी च हसति स्वपतिं पुत्रवत्सलम् ॥ ४८ ॥ अर्थार्थी जीवलोकोऽयं श्मशानमपि सेवते । जनितारमपि त्यक्त्वा निःस्वं गच्छति दूरतः ॥ ४९ ॥ वरं हालाहलं पीतं सद्यः प्राणहरं विषम् । न द्रष्टव्यं धनाढ्यस्य भ्रूभङ्गकुटिलं मुखम् ॥ ५० ॥ राजतः सलिलादग्नेश्चोरतः स्वजनादपि । भयमर्थ-

वहां नित्यं मृत्योः प्राणभृतामिव ॥ ८१ ॥ अर्थस्योपार्जने दुःखमर्जितस्यापि रक्षणे । नाशे दुःखं व्यये दुःखं धिगर्थं दुःखभाजनम् ॥८२॥ अविश्वासनिधानाय महापातकहेतवे । पितृपुत्रविरोधाय हिरण्याय नमोऽस्तु ते ॥ ८३ ॥ हिरण्यरत्नसञ्चयाः शुभाशुभेन साञ्चिताः । न यस्य देहसंक्षये भवन्ति कायतापकाः ॥ ८४ ॥ धनस्य यस्य राजतो भयं न चास्ति चौरतः । मृतञ्च यन्न मुञ्चति समर्जयस्व तद्धनम् ॥ ८५॥ बधिरयति कर्णविवरं वाचं मूकयति नयनमन्धयति। विकृतयति गात्रयष्टिं सम्पद्रोगोऽयमद्भुतो राजन् ॥ ८६ ॥ मज्जतीयति यज्जने जनो वर्जनीयजनसर्जनादिभिः । आशु नश्यति चिराय सञ्चिता वञ्चिता जगति के न सम्पदा॥८७ वरमभिमानतरुतल्पवासो वरमिह भिक्षा वरमुपवासः । वरमपि घोरे नरके पतनं न च धनगर्वितबान्धवशरणम् ॥८८॥ आपद्गत हससि किं द्रविणान्ध मूढ लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम् । एतान् प्रपश्यसि घटान् जलयन्त्रचक्रे रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः॥८९॥केचिद्धनन्निधते भुवि नोपभोगं कुर्वन्ति लोभवशगा न विदन्ति केचित् । अन्येन गोपितमथान्यजना हरन्ति तच्चेन्मदीयपरमेव जलमेव हन्त ॥ ९० ॥

## गृहस्थाश्रमगुणदोषौ २९

पर्यासि पञ्चवर्षेण भूतानि च जनाधिप । गृहस्थैरेव धार्यन्ते तस्माज्ज्येष्ठो गृहाश्रमी ॥ १ ॥ न्यायार्जितधनस्तत्त्वज्ञाननि-

ष्ठोऽतिथिप्रियः । श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते ॥ २ ॥ यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम् । तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥ ३ ॥ यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः । तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः ॥ ४ ॥ यस्मात्त्रयोऽप्याश्रमिणो दानेनान्नेन चान्वहम् । गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही ॥ ५ ॥ स संधार्यः प्रयत्नेन स्वर्गमक्षयमिच्छता । सुखञ्चेहेच्छता नित्य योऽधार्यो दुर्बलेन्द्रियैः ॥ ६ ॥ ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा । एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥ ७ ॥ सर्वेषामपि चैतेषां वेदस्मृतिविधानतः । गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान्बिभर्ति हि ॥ ८ ॥ अस्ति पुत्रो वशे यस्य भृत्यो भार्या तथैव च । अभावे सति संतोषः स्वर्गस्थोऽसौ महीतले ॥ ९ ॥ अतिथिर्बालकः पत्नी जननी जनकस्तथा । पञ्चैते गृहिणा पोष्या इतरे च स्वशक्तितः ॥ १० ॥ मातरं पितरं पुत्रं दारानतिथिसोदरान् । हित्वा गृही न भुञ्जीयादेकाकी तु कदाचन ॥ ११ ॥ विघसाशी भवेन्नित्यं नित्यञ्चामृतभोजनः । विघसं भुक्तशेषन्तु यज्ञशेषमथामृतम् ॥ १२ ॥ गृहस्थं हि सदा देवाः पितरोऽतिथयस्तथा । भृत्याश्चैवोपजीवन्ति तान्भरस्व महीपते ॥ १३ ॥ अतिथिः पूजितो यस्य गृहस्थस्य तु गच्छति । नान्यस्तस्मात्परो धर्म इति प्राहुर्मनीषिणः ॥ १४ ॥ पात्रन्त्वातिथिमासाद्य शीलाढ्यं

यो न पूजयेत् । स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति ॥ १५ ॥देवैश्चैव मनुष्यैश्च तिर्यग्भिश्चोपजीव्यते । गृहस्थः प्रत्यहं यस्मात्तस्माज्ज्येष्ठाश्रमो गृही ॥ १६ ॥ तप्त्वा तपस्वी विपिने क्षुधार्तो गृहं समायाति सदाऽन्नदातुः । भुक्त्वा म षाश्च प्रददाति तस्मै तपो विभागं भजते हि तस्य ॥ १७ ॥ यदि रामा यदि च रमा यदि तनयो विनयधीगुणोपेतः । तनये तनयोत्पत्तिः सुरवरनगरे किमाधिक्यम् ॥ १८ ॥ क्षुधितपाथोदककर्दमानि मुखेदशाखान्यनिर्गमितानि । स्वाहा स्वधाकारनिरन्तराणि स्थानन्दतुल्यानि गृहाणि सन्ति॥१९॥ वनेऽपि दोषाः प्रभवन्ति रागिणां गृहेऽपि पञ्चेन्द्रियनिग्रह स्तपः । अकुत्सिते कर्मणि यः प्रवर्तते निवृत्तरागस्य गृहं तपोवनम् ॥ २० ॥ स्वकर्मधर्मार्जितजीवितानां स्वेष्वेव दारेषु सदा रतानाम् । जितेन्द्रियाणामतिथिप्रियाणां गृहेऽपि मोक्षः पुरुषोत्तमानाम्॥२१॥सानन्दं सदनं सुताश्च सुधियः कान्ता न दुर्भाषिणी सन्मित्रं सुधनं स्वयोषिति रतिश्चाज्ञापराः सेवकाः। आतिथ्यं शिवपूजनं प्रतिदिनं मिष्टान्नपानं गृहे साधोः सङ्गमुपासते हि सततं धन्यो गृहस्थाश्रमः ॥ २२ ॥ मानुष्यं वरवंशजन्म विभवो दीर्घायुरारोग्यता सन्मित्रं सुसुतः सती प्रियतमा भक्तिश्च नारायणे । विद्वत्त्वं सुजनत्वमिन्द्रियजयः सत्पात्रदाने रतिस्ते पुण्येन विना त्रयोदश गुणाः संसारिणां दुर्लभाः॥२३॥ माता यस्य गृहे नास्ति भार्या चाप्रियवादिनी।

अरण्यं तेन गन्तव्यं यथाऽरण्यं तथा गृहम् ॥ २४ ॥ यत्र नास्ति दधिमन्थनघोषो यत्र नो लघुलघूनि शिशूनि । यत्र नास्ति गुरुगौरवपूजा तानि किं बत गृहाणि वनानि॥२५॥न विप्रपादोदकपङ्किलानि न वेदशास्त्रध्वनिगर्जितानि । स्वाहा-स्वधाकारविवर्जितानि श्मशानतुल्यानि गृहाणि तानि॥२६॥ विधिना खलु वञ्चिता वयं तितरीतु वटवे न शक्नुमः । अपि भैक्ष्यमकिञ्चनत्वतो धिगिदं जन्म निरर्थकं गतम् ॥ २७ ॥ निःस्वो भवेद्यदि गृही निरयी स नून भोक्तुं न दातुमपि यः क्षमतेऽणुमात्रम् । पूर्णोऽपि पूर्तिमभिमन्तुमशक्नुवन्यो मोहेन शं न मनुते खलु तत्र तत्र ॥२८॥क्रोशन्तः शिशवः सवारि सदनं पङ्कावृतञ्चाङ्गणं शय्या दंशवती च रूक्षमशनं धूमेन पूर्णं गृहम् । भार्या निष्ठुरभाषिणी प्रभुरपि क्रोधेन पूर्णःसदा स्नानं शीतलवारिणा हि सततं धिग्धिग्गृहस्थाश्रमम् ॥२९॥ तावद्विद्याऽनवद्या गुणगणमहिमा रूपसंपत्तिशौर्यं स्वस्थाने सर्वशोभा परगुणकथने वाक्पटुस्तावदेव। यावत्पाकाकुलाभिः स्वगृहयुवतिभिः प्रेषितापत्यवक्त्राद्धे वावा नास्ति तैलं न च लवणमपीत्यादिवाचा प्रचारः ॥ ३० ॥

## सन्तोषः ३०

सन्तोषामृततृप्तानां यत्सुखं शान्तचेतसाम् । कुतस्तद्धन-लुब्धानामितश्चेतश्च धावताम् ॥ १ ॥ सर्वत्र संपदस्तस्य स-न्तुष्टं यस्य मानसम् । उपानद्गूढपादस्य ननु चर्मावृतैव भूः

॥ २ ॥ अकिञ्चनस्य दान्तस्य शान्तस्य समचेतसः । सदा सन्तुष्टमनसः सर्वाः सुखमयाः दिशः ॥ ३ ॥ आत्माधीन शरीरार्था स्वपर्णा मिद्रया स्वया । कदन्नमपि मर्त्यानाममृत स्त्राय कल्पते ॥ ४ ॥ अकृत्वा परसन्तापमगत्वा खलनम्र ताम् । अनुसृत्य सतां वर्त्म यत्स्वल्पमपि तद्वहु ॥ ५ ॥ यो मे गर्भगतस्यापि वृत्तिं कल्पितवान्प्रभुः । शेषवृत्तिविधाने च न वा सुप्तो न वा मृतः ॥ ६ ॥ अकिञ्चनोऽप्यसौ जन्तुः साम्राज्यसुखमश्नुते । आधिव्याधिविनिर्मुक्तं सन्तुष्टं यस्य मानसम् ॥७॥ धेनुर्वत्सस्य गोपस्य स्वामिनस्तस्करस्य च । पयः पिबति यस्तस्या धेनुस्तस्येति निश्चयः ॥ ८ ॥ नान्यो नास्ति पिपासायाः सन्तोषः परमं सुखम् । तस्मात्सन्तोषमेवेह परं पश्यन्ति पण्डिताः ॥ ९ ॥ गोशतादपि गोक्षीरं प्रस्थं धान्यशतादपि । प्रासादादपि खट्वार्धं शेषाः परविभूतयः ॥१०॥ न योजनशतं दूरं वाह्यमानस्य तृष्णया । सन्तुष्टस्य करमाप्तेऽप्यर्थे भवति नादरः ॥ ११ ॥ इत्यर्थं नातिचेष्टेव सा हि धात्रैव निर्मिता । गर्भादुत्पतिते जन्तौ मातुः प्रस्रवतः स्तनौ ॥१२॥येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः । मयू राश्चित्रिता येन स मे वृत्तिं विधास्यति ॥ १३ ॥ अयोऽयः पश्यतः कस्य महिमा नोपचीयते । उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ॥ १४ ॥ विश्वम्भर भरस्व मां विश्वम्भराद्रा बहिः कुरु । उभयोर्यद्यशक्तोऽसि त्यज विश्वम्भराभिधाम् ॥

१५ ॥ सन्तोषं परमास्थाय सुखार्थी संयतो भवेत् । सन्तोषमूलं हि सुखं दुःखमूलं विपर्ययः ॥ १६ ॥ आपदर्थे धनं रक्षेन्महतां कुत आपदः । कदाचित्कुपितो देवः संचितञ्चापि नश्यति ॥ १७ ॥ सन्तोषैश्वर्यसुखिनां दूरे दुर्गतिभूमयः । भोगाशापाशबद्धानामवमानाः पदे पदे ॥ १८ ॥ य इमामखिलां भूमिं शिष्यादेको महीपतिः । तस्याप्युदरमेकं वै किमिदं त्वं प्रशंससि ॥ १९ ॥ यस्त्विमां वसुधां कृत्स्नां प्रशासेदखिलां नृपः । तुल्याश्मकाञ्चनो यश्च स कृतार्थो न पार्थिवः ॥ २० ॥ यदृच्छालाभतुष्टस्य तेजो विप्रस्य वर्धते । तत्प्रशाम्यत्यसन्तोषादम्भसेवाशुशुक्षणिः ॥ २१ ॥ सन्तुष्टः को न शक्नोति फलमूलैश्च वर्तितुम् । सर्वाणीन्द्रियलौल्येन सङ्कटान्यवगाहते ॥ २२ ॥ सन्तुष्टस्य निरीहस्य स्वात्मारामस्य यत्सुखम् । कुतस्तत्कामलोभेन धावतोऽर्थेहया दिशः ॥ २३ ॥ यद्यदेव हि वाञ्छेत ततो वाञ्छा प्रवर्तते । प्राप्त एवार्थतः सोऽर्थो यतो वाञ्छा निवर्तते ॥ २४ ॥ सन्तोषस्त्रिषु कर्तव्यः स्वदारे भोजने धने । त्रिषु चैव न कर्तव्यो दाने तपसि पाठने ॥ २५ ॥ अर्थी करोति दैन्यं लब्धार्थो गर्वपरितोषम् । नष्टधनश्च स शोकं सुखमास्ते निःस्पृहः पुरुषः ॥२६॥ त्वामुदर साधु मन्ये शाकैरपि यदसि लब्धपरितोषम् । हतहृदयं ह्यधिकाधिकवाञ्छाशतदुर्भरं न पुनः ॥२७॥ सर्पाः पिबन्ति पवनं न च दुर्बलास्ते शुष्कैस्तृणैर्व-

मगना बन्धिनो भवन्ति । कन्दैः फलैर्मुनिवराः क्षपयन्ति कालं सन्तोष एव पुरुषस्य परं निधानम् ॥ २८ ॥ वयमिह परितुष्टा वल्कलैस्त्वञ्च लक्ष्म्या सम इह परितोषो निर्विशेषो विशेषः । स हि भवति दरिद्रो यस्य तृष्णा विशाला मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥ २९ ॥ गम्भाक्ष्यो नवमल्लिकां मधुकरस्त्यक्त्वा गतो यूथिकां तांस्त्यक्त्वाऽऽशु गतश्च चन्दनवनं पश्चात्सरोजे गतः । बद्धस्तत्र निशाकरेण सहसा रोदित्यसौ मन्दधीः सन्तोषेण विना पराभवपदं प्राप्नोति सर्वो जनः ॥ ३० ॥

## तृष्णा ३१

तृष्णा हि सर्वपापिष्ठा नित्योद्वेगकरी स्मृता । अधर्मबहुला चैव घोरा पापानुबन्धनी ॥ १ ॥ यथैव शृङ्गं गोः काले वर्धमानस्य वर्धते । तथैव तृष्णा वित्तेन वर्धमानेन वर्धते ॥ २ ॥ वलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः । गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥३॥ तृष्णां चेह परित्यज्य को दरिद्रः क ईश्वरः । तस्याश्चेत्प्रसरो दत्तो दास्यञ्च शिरसि स्थितम् ॥ ४ ॥ च्युता दन्ताः सिताः केशा दृङ्निरोधः पदे पदे । पातसज्जमिमं देहं तृष्णा साध्वी न मुञ्चति ॥ ५ ॥ तृष्णे त्वमपि तृष्णान्धा निपुं स्थानेषु वर्तसे । व्याधितेष्वनपत्येषु जरापरिणतेषु च ॥६॥ अपि मेरूपमं प्राज्ञमपि शूरमपि स्थिरम् । तृणीकरोति तृष्णैका निमेषेण नरोत्तमम् ॥ ७ ॥

आशा नाम मनुष्याणां काचिदाश्चर्यशृङ्खला । यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति पङ्गुवत् ॥८॥ तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् । येनाशाः पृष्ठतः कृत्वा नैराश्यमवलम्बितम् ॥९॥ न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥ १० ॥ धनेषु जीवितव्येषु स्त्रीषु भोजनवृत्तिषु । अतृप्ता मानवाः सर्वे याता यास्यन्ति यान्ति च ॥ ११ ॥ क्षुत्तृडाशाः कुटुम्बिन्यो मयि जीवति नान्यगाः । तासामाशा महासाध्वी कदाचिन्मां न मुञ्चति ॥१२॥ यौवनं जरया ग्रस्तमारोग्यं व्याधिभिर्हतम् । जीवितं मृत्युरभ्येति तृष्णैका निरुपद्रवा ॥ १३ ॥ सप्तद्वीपाधिपतयो नृपा वैन्यगदादयः । अर्थैः कामैर्गता नान्तं तृष्णाया इति शुश्रुम ॥१४॥ सहस्रेभ्यः सहस्रेभ्यः कश्चिदुत्थाय वीर्यवान् । भिनत्ति वासनाजालं पञ्जरं केसरी यथा ॥१५॥ यान्येवैतानि दुःखानि दुर्जराण्युन्नतानि च । तृष्णावल्ल्याः फलानीह तानि दुःखानि राघव ॥ १६ ॥ यावती यावती जन्तोरिच्छोदेति यथा यथा । तावती तावती दुःखबीजमुष्टिः प्ररोहति ॥ १७ ॥ यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः । नालमेकस्य तत्सर्वमिति पश्यन्न मुह्यति ॥ १८ ॥ हते भीष्मे हते द्रोणे कर्णे च त्रिदिवं गते । आशा बलवती राजन् शल्यो जेष्यति पाण्डवान् ॥ १९ ॥ आशा हि परमं दुःखं नैराश्यं परमं सुखम् । यथा संछिद्य कान्ताशां सुखं

सुप्तापि विद्रवा ॥ २० ॥ उपकारः परो धर्मः परार्थं कर्म
नैपुणम् । पात्रे दानं परः कामः परो मोक्षो वितृष्णता ॥
२१ ॥ विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः ।
निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥२२॥ जीर्यन्ति
जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः । जीर्यतश्चक्षुषी
श्रोत्रे तृष्णैका तरुणायते ॥ २३ ॥ काम जानामि ते मूलं
संकल्पात्किल जायसे । संकल्पे तु यदा त्यक्ते कथं त्वं मयि
जायसे ॥२४॥ कामकिङ्करतां प्राप्य जनो नो कस्य किङ्करः ।
एवं काम परित्यज्य जनोऽसौ कस्य किङ्करः ॥ २५ ॥
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः । योऽसौ
प्राणान्तको रोगस्तां तृष्णां त्यजतः सुखम् ॥ २६ ॥ यच्च
कामसुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते
नार्हतः षोडशीं कलाम् ॥ २७ ॥ नाहं पूरयितुं शक्यां न
मासैर्मेरुसमम । अपूर्यां पूरयन्निच्छामायुषाऽपि न यान्तु
यात् ॥ २८ ॥ धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ २९ ॥ ते धन्याः
पुण्यभाजस्ते तैस्तीर्णः क्लेशसागरः । जगत्संमोहजननी यैरा
शाशीविषी जिता ॥ ३० ॥ आशाया ये दासास्ते दासाः
सर्वलोकस्य । आशा येषां दासी तेषां दासायते लोकः ॥
३१॥ अङ्गं गलितं पलितं मुण्डं दशनविहीनं जातं तुण्डम् ।
वृद्धो याति गृहीत्वा दण्डं तदापि न मुञ्चत्याशा पिण्डम् ॥

३२॥ दिनयामिन्यौ सायं प्रातः शिशिरवसन्तौ पुनरायातः। कालः क्रीडति गच्छत्यायुस्तदपि न मुञ्चत्याशावायुः॥३३॥ भोगा न भुक्ता वयमेव भुक्तास्तपो न तप्तं वयमेव तप्ताः। कालो न यातो वयमेव यातास्तृष्णा न जीर्णा वयमेव जीर्णाः ॥३४॥ वपुः कुब्जीभूतं गतिरपि तथा यष्टिशरणा विशीर्णा दन्तालिः श्रवणविकलं श्रोत्रयुगलम्। शिरः शुक्लं चक्षुस्तिमिरपटलैरावृतमहो मनो मे निर्लज्जं तदपि विषयेभ्यः स्पृहयति ॥ ३५ ॥ खलोल्लापाः सोढाः कथमपि तदाराधनतया निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा। कृतश्चित्तस्तम्भः प्रतिहतधियामञ्जलिरपि त्वमाशे मोघाशे किमपरमतो नर्तयसि माम् ॥ ३६ ॥ उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन सन्तोषिताः। मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम् ॥३७॥ भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किञ्चित्फलं त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला। भुक्तं मानविवर्जितं परगृहेष्वाशङ्कया काकवत्तृष्णे जृम्भसि पापकर्मनिरते नाद्यापि सन्तुष्यसि ॥ ३८ ॥ निःस्वो वष्टि शतं शती दशशतं लक्षं सहस्राधिपो लक्षेशः क्षितिराजतां क्षितिपतिश्चक्रेशतां वाञ्छति। चक्रेशः सुरराजतां सुरपतिर्ब्रह्मास्पदं वाञ्छति ब्रह्मा विष्णुपदं हरिः शिवपदं तृष्णा-

दर्पि को गतः ॥ ३९ ॥ ध्यात्वं याचनतत्परेण मनसा देहीतिवाक् प्रेरिता मुक्तं मानविवर्जितं परगृहे साधाङ्गुलं काकुवत्। साक्षेपं भृकुटीकृतालसकुटिलं दृष्टं सखानां मुखं तृष्णे देवि यदन्यदिच्छसि पुनस्तत्रापि सज्जा वयम् ॥४०॥

## याचकगर्हा ३२

द्वारं द्वारं अटन्तीह भिक्षुकाः पात्रपाणयः। दर्शयन्त्येव लोकानामदातुः फलमीदृशम् ॥ १ ॥ बोधयन्ति न याचन्ते भिक्षाद्वारा गृहे गृहे। दीयतां दीयतां नित्यमदातुः फलमीदृशम् ॥ २ ॥ वेपथुर्मलिनं वक्त्रं दीना वाग्गद्गदः स्वरः। मरणे यानि चिह्नानि तानि चिह्नानि याचके ॥ ३ ॥ गतेर्भङ्गः स्वरो हीनो गात्रे स्वेदो महद्भयम्। मरणे यानि चिह्नानि तानि चिह्नानि याचके ॥ ४ ॥ देहीति वचनं श्रुत्वा देहस्थाः पञ्चदेवताः। मुखान्निर्गत्य गच्छन्ति श्रीह्रीधीधृतिकीर्तयः ॥ ॥ दारिद्र्यानलसंतापः शान्तः सन्तोषवारिणा। याचकाशाविघातान्तर्दाहः केनोपशाम्यति ॥६॥ अनाहूताः स्वयं यान्ति रसास्वादविलोलुपाः। निवारिता न गच्छन्ति मक्षिका इव भिक्षुकाः ॥ ७ ॥ सेवैव याचयामेषु यथा दृश्या मितेषु च। एतेषु दाक्षिण्या दृष्टा दायादायाचिव दुर्लभम् ॥८॥ वदनात्पद निर्यान्ति भाषा याच्ञाऽक्षरैः सह। ददामीत्यक्षरैर्दातुः पुनः कर्णौ द्विषन्ति हि ॥ ९ ॥ देहीति वक्तुकामस्य यद्दुःखमुपजायते। दाता चेत्तद्विजानीयाद्दद्यात्स्वपिशि

तान्यपि ॥१०॥ तीक्ष्णधारेण खड्गेन वरं जिह्वा द्विधा कृता। न तु मानं परित्यज्य देहि देहीति भाषितम् ॥११॥ अदृष्टमुखभङ्गस्य युक्तमन्धस्य याचितुम् । अहो बत महत्कष्टं चक्षुष्मानपि याचते ॥१२॥ पुरतः प्रेरयत्याशा लज्जा पृष्ठावलम्बिनी । ततो लज्जाशयोर्मध्ये दोलायत्यर्थिनां मनः ॥१३॥ एकेन तिष्ठताऽधस्तादन्येनोपरि तिष्ठता । दातृयाचकयोर्भेदः कराभ्यामेव सूचितः ॥१४॥ काक आह्वयते काकान् याचको न तु याचकान् । काकयाचकयोर्मध्ये वरं काको न याचकः ॥१५॥ तृणादपि लघुस्तूलस्तूलादपि च याचकः । वायुना किं न नीतोऽसौ मामयं याचयिष्यति ॥ १६ ॥ मनस्वी म्रियते कामं कार्पण्यं न तु गच्छति। अपि निर्वाणमायाति नानलो याति शीतताम् ॥ १७ ॥ मनस्विनो न मन्यन्ते परतः प्राप्य जीवनम् । बलिभुग्भ्यो हि काकेभ्यः स्पृहयन्ति न कोकिलाः ॥ १८ ॥ अस्य दग्धोदरस्यार्थे किन्न कुर्वन्ति पण्डिताः। वानरीमिव वाग्देवीं नर्तयन्ति गृहे गृहे॥ १९॥ किमकारि न कार्पण्यं कस्याग्रंघि न देहली । अस्य पापोदरस्यार्थे किमनाटि न नाटनम् ॥ २० ॥ दक्षिणाशाप्रवृत्तस्य प्रसारितकरस्य च । तेजस्तेजस्विनोऽर्कस्य हीयतेऽन्यस्य का कथा ॥ २१ ॥ साधुरेवार्थिभिर्याच्यः क्षीणवित्तोऽपि सर्वदा । शुष्कोऽपि हि नदीमार्गः खन्यते सलिलार्थिभिः ॥२२॥ लक्ष्मीर्वसति वाणिज्ये तदर्धं कृषिकर्मणि ।

नम् । सन्निपातस्य चिह्नानि मद्यं सर्वाणि दर्शयेत् ॥ २ ॥
मद्यपस्य कुतः सत्यं दया मांसाशिनः कुतः । कामिनश्च कुतो विद्या निर्धनस्य कुतः सुखम् ॥ ३ ॥ अयुक्तं बहुभाषन्ते यत्र कुत्रापि शेरते । नग्ना विक्षिप्य गात्राणि बालका इव मद्यपाः ॥ ४ ॥ मत्ता हि नास्ति सर्वं मिथ्या प्रलपति हि विकलया बुद्धया । मातरमपि कामयते मावज्ञं मद्यपानमत्तः सन् ॥ ५ ॥ चित्ते भ्रान्तिर्जायते मद्यपानाद्भ्रान्ते चित्ते पापचर्यामुपैति । पापं कृत्वा दुर्गतिं यान्ति मूढास्तस्मान्मद्यं नैव पेयं न पेयम् ॥ ६ ॥ न मद्यव्यसनी क्षीवः कुर्याद्वेतालचेष्टितम् । तृष्णयो हि यतुः क्षीवास्तृणैः महरणैः क्षयम् ॥ ७ ॥ यत्पीत्वा गुरवेऽपि कुप्यति विना हेतोस्तथा गोदंति भ्रान्तिं याति करोति नाट्यमपि व्याधेर्भवत्यास्पदम् । कौपीनं विवृणोति लोकपुरतोऽप्युन्मत्तवच्चेष्टते तल्लज्जापरिपन्थि मोहजननं मद्यं न पेयं बुधैः ॥ ८ ॥ नादत्तमिच्छेन्न पिबेच्च मद्यं प्राणान्न हिंसेन्न वदेच्च मिथ्या । परस्य दारान्मनसाऽपि नेच्छेद्यः स्वर्गमिच्छेद्गृहवत्समवेष्टुम् ॥ ९ ॥ मां शकरोऽपि गृह्णाति किं न गृह्णामि गर्दभ । नरो गर्दभतां याति गर्दभस्य च का कथा ॥ १० ॥ नरो दारिद्र्यशीर्णोऽपि तमाखुं नैव मुञ्चति । निवारितोऽपि मार्जारस्तमाखुं नैव मुञ्चति ॥ १० ॥ न स्वादु नौषधमिदं न च वा सुगन्धि नाक्षिप्रियं किमपि शुष्कतमाखुचूर्णम् । किन्त्वाक्षिरोगजनकञ्च तदस्य भोगे बीजं

नृणां नहि नहि व्यसन विनाऽन्यत् ॥ १२ न श्रियस्तत्र तिष्ठन्ति द्यूतं यत्र प्रवर्तते । न शस्यजातयस्तत्र विद्यन्ते यत्र पावकः ॥ १३ ॥ द्यूतमेतत्पुरा कल्पे दृष्टं वैरकरं नृणाम् । तस्माद्द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥१४ वश्या ऽसौ मदनक्लाशा रूपेन्धनसमेधिता । कामिभिर्यत्र हूयन्ते यौवनानि धनानि च ॥ १५ ॥ कष्टं जीवति गणिका यत्र काऽपि रात्रमेवका वेषः । दिवसे दिवसे मरणं परस्य च विरक्तस्तत्र दीनः ॥ १६ ॥ एता हसन्ति च रुदन्ति च वित्तहेतोर्विश्वासयन्ति पुरुषं न च विश्वसन्ति । तस्मान्नरेण कुलशीलसमन्वितेन वेश्याः श्मशानघटिका इव वर्जनीयाः ॥ १७ ॥ तपोव्रतयशोविद्याकुलीनत्वं शमो दयाः । छिद्यन्ते वेश्यया सद्यः कुठारेण लता यथा ॥ १८ ॥ परदारा न गन्तव्या पुरुषेण विपश्चिता । यतो भवन्ति दुःखानि नृणां नास्त्यत्र संशयः ॥१९॥ वधो बन्धो धनभ्रंशस्तापः शोकः कुलक्षयः । आयासः कलहो मृत्युर्लभ्यन्ते पारदारिकैः ॥२०॥ अविद्यानात्मसिद्धिर्नष्टा जीविमामाद्भुशायनः । विनष्टा रावणा औत्स्यादपि सर्वत्र सर्वथा ॥ २१ ॥ परदारा न गन्तव्या सर्व वर्णेषु कर्हिचित् । नहीदृशमनायुष्यं त्रिषु लोकेषु विद्यते ॥ २२ ॥ माता स्वसा दुहिता वा नैकशय्या समो भवेत् । बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ २३ ॥ परस्त्रीस्मरणेनापि कोऽप्यनर्थागमःस्मृतः । दृष्टो कुमारादिरन्याराद्दा दुर्योधनरावणौ ॥२४॥ परनारी महामारी

स्त्रष्ट्राऽकारि यतस्ततः । किंत्वेष पुनर्मृत्युः सर्वज्ञेनापि निर्मितः ॥ २५ ॥ हरणञ्च परस्वानां परदाराऽभिमर्शनम् । सुहृदश्च परित्यागस्त्रयो दोषाः क्षयावहाः ॥ २६ ॥ त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २७ ॥ स्वाधीनेऽपि कलत्रे नीचः परदारलम्पटो भवति । सम्पूर्णेऽपि तडागे काकः कुम्भोदकं पिबति ॥२८॥ अनर्थकं विभवानां गृहेभ्यः पापैः मन्विं परदाराऽभिमर्शनम् । दम्भं स्तैन्यं पिशुनं मद्यपानं न सेवते यश्च सुखी सदैव ॥ २९ ॥ कुत्र विधेयो यत्नो विद्याऽभ्यासे सदौषधे दाने । अवधीरणा क कार्या खलपरयोषित्परधनेषु ॥ ३० ॥ नहीदृशमनायुष्यं लोके किञ्चन विद्यते । यादृशं पुरुषस्येह परदारोपसेवनम् ॥ ३१ ॥ परिहरत पराङ्गनानुषङ्गं व्रत यदि जीवितमस्ति वल्लभं वः । हर हर हरिणीदृशो निमित्तं दश दशकन्धरमौलयो लुठन्ति ॥ ३२ ॥ रहसि रचितमेतज्जारकर्मात्र नीचैर्लशुनमिव सुभुक्तं याति लोके प्रसिद्धिम् । तदिह महलगर्ह्यं नैव विद्वान् विदध्यात् क्षणिकसुखकृते स्यायत्प्रतिष्ठार्थनाशः ॥ ३३ ॥ रक्षःपतिर्जनकजाहरणेन वाली तारापहारविधिना स च कीचकोऽपि । पाञ्चालिकाप्रमथनान्निधनं जगाम तस्मात्कदापि परदाररतिं न कुर्यात् ॥ ३४ ॥ यः कुरुते परयोषित्सङ्गं वाञ्छति यश्च धनं परकीयम् । यश्च सदा गुरुवृद्धविमानी तस्य सुखं न

परत्र न च ॥ १५ ॥ मातुः स्वसृषु दारेषु कपटं घपते म्रियम् । नयन्ति निकृतिप्रज्ञाः परदाराः पराभवम् ॥ १६ ॥ प्राणापहारः स्तैन्यं च परदाराभिमर्शनम् । त्रीणि पापानि कायेन नित्यशः परिवर्जयेत् ॥१७॥ व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते । व्यसन्यधोऽधो व्रजति स्वर्यात्यव्यसनी मृतः ॥ १८ ॥ विषस्य विषयाणां च दृश्यते महदन्तरम् । उपभुक्तं विषं हन्ति विषयाः स्मरणादपि ॥ १९ ॥ पतङ्गमातङ्गकुरङ्गभृङ्गमीना हताः पञ्चभिरेव पञ्च । एकः प्रमादी स कथं न हन्यते यः सेवते पञ्चभिरेव पञ्च ॥ २० ॥

## संसारवर्णनम् १५

संसारविषवृक्षस्य द्वे फले अमृतोपमे । काव्यामृतरसास्वाद आलापः सज्जनैः सह ॥१॥ यथा विन्ध्यवनस्थाने मदकुरम्बि करेणवः । तथा तस्मिन्परे भूम्नि प्रमाणाम्बसरेणवः ॥ २ ॥ यः स्वविभवोऽस्माकं प्रियो न विषयस्तवः । तज्जगत्कृतवने अकिञ्चन ममास्ति महामते ॥ ३ ॥ देहगृहपानादौ सुविचार्य विलोक्यताम् । क यान्ति कुत्र वा हंसास्तस्थान्यायेति निश्चिनु ॥ ४ ॥ दुःसाङ्गारकलीनः संसारोऽयं महाभयो गहनः । इह विषयामृतकालस विषमसमाचार मा निपत ॥ ५ ॥ अपर्यविचारितचारुतया संसारो भाति रमणीयः । अत्र पुनः परमार्थदृशा किमपि न सारो रमणीयः ॥ ६ ॥ एतस्मात्किमिवेन्द्रजालमपरं यद्गर्भवासस्थितं रेतश्चेतति हस्तमस्तक-

पद्मोद्भूतनानाङ्कुरम् । पर्यायेण शिशुत्वयौवनजरावेषैरनेकैर्वृतम् पश्यत्यत्ति शृणोति जिघ्रति तथा गच्छत्यथागच्छति । ७ ॥ क्वचिद्विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहः क्वचिद्वीणावादः क्वचिदपि च हा हेति रुदितम् । क्वचिद्रम्या रामा क्वचिदपि जराजर्जरतनुर्न जाने संसारः किममृतमयः किं विषमयः ॥ ८ ॥ कृच्छ्रेणामेध्यमध्ये नियमिततनुभिः स्थीयते गर्भवासे कान्ताविश्लेषदुःखव्यतिकरविषमे यौवने विप्रयोगः । नारीणामप्यवज्ञा विलसति नियतं वृद्धभावोऽप्यसाधुः संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किञ्चित् ॥९॥

## लोकसनागर्हा ३५

अतिदाक्षिण्ययुक्तानां शङ्कितानां पदे पदे । परापवादभीरूणां दूरतो यान्ति सम्पदः ॥ १ ॥ मूर्खाणां पण्डिता द्वेष्या निर्धनानां महाधनाः । व्रतिनः पापशीलानामसतीनां कुलस्त्रियः ॥ २ ॥ निन्दां यः कुरुते साधोस्तथा स्वं दूषयत्यसौ । खे भूतिं यस्त्यजेदुच्चैर्मूर्ध्नि तस्यैव सा पतेत् ॥३॥ काकः पक्षिषु चाण्डालः स्मृतः पशुषु गर्दभः । नराणां कोऽपि चाण्डालः स्मृतः सर्वेषु निन्दकः ॥ ४ ॥ असंमाने तपोवृद्धिः संमानाच्च तपः क्षयः । पूजया पुण्यहानिः स्यान्निन्दया सद्गतिर्भवेत् ॥ ५ ॥ विद्यते नहि स कश्चिदुपायः सर्वलोकपरितोषकरो यः । सर्वथा स्वहितमाचरणीयं किं करिष्यति जनो बहुजल्पः ॥ ६ ॥ जीवन्तु मे शत्रुगणाः

मूर्खा जनाः ॥ १४ ॥ सूक्तिं कर्णसुधां व्यनक्तु सुजनस्त-
स्मिन्न मोदामहे ब्रूतां वाचमसूयको विषमुचं तस्मिन्न खिद्या-
महे । या यस्य प्रकृतिः स तां वितनुतां किं नस्तया चिन्तया
कुर्मस्तत्खलु कर्म जन्मनिगडच्छेदाय यज्जायते ॥ २ ॥

## कर्माख्यानम् ३६

कर्मणा बाध्यते बुद्धिर्न बुद्ध्या कर्म बाध्यते । सुबुद्धि-
रपि यद्रामो हैमं हरिणमन्वगात् ॥ १ ॥ येन यत्रैव भोक्तव्यं
सुखं वा दुःखमेव वा । स तत्र बद्ध्वा रज्ज्वेव बलाद्दैवेन
नीयते ॥ २ ॥ सा सा सम्पद्यते बुद्धिः सा मतिः सा च
भावना । सहायास्तादृशा एव यादृशी भवितव्यता ॥ ३ ॥
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् । तथा पूर्वकृतं कर्म
कर्तारमनुगच्छति ॥ ४ ॥ अचोद्यमानानि यथा पुष्पाणि च
फलानि च । स्वं कालं नातिवर्तन्ते तथा कर्म पुरा कृतम् ॥
५॥ विपत्तौ किं विषादेन सम्पत्तौ हर्षणेन किम् । भवितव्यं
भवत्येव कर्मणामीदृशी गतिः ॥ ६ ॥ आपदामापतन्तीनां
हितोऽप्यायाति हेतुताम् । मातृजङ्घा हि वत्सस्य स्तम्भी-
भवति बन्धने ॥७॥ व्रजत्यधः प्रयात्युच्चैर्नरः स्वैरेव चेष्टितैः ।
अधः कूपस्य खनक ऊर्ध्वं प्रासादकारकः ॥८ ॥ अचेष्ट-
मपि चामीनं श्रीः कञ्चिदुपतिष्ठति । कश्चित्कर्माणि कुर्वन्हि
न प्राप्यमधिगच्छति ॥ ९ ॥ उपर्युपरि लोकस्य सर्वो गन्तुं

शुभाशुभम् । तदेव पुत्र सार्थकं भवत्यमुत्र गच्छतः ॥ २३ ॥ सुखस्य दुःखस्य न कोऽपि दाता परो ददातीति कुबुद्धिरेषा । अहं करोमीति वृथाऽभिमानः स्वकर्मसूत्रग्रथितो हि लोकः ॥ २४ ॥ क्षते प्रहारा निपतन्त्यभीक्ष्णमन्नक्षये वर्धते जाठराग्निः । आपत्सु वैराणि समुद्भवन्ति वामे विधौ सर्वमिदं नराणाम् ॥ २५ ॥ न भूतपूर्वो न च केन दृष्टो हेम्नः कुरङ्गो न कदाऽपि वार्ता । तथापि तृष्णा रघुनन्दनस्य विनाशकाले विपरीतबुद्धिः ॥ २६ ॥ यन्मनोरथशतैरगोचरं न स्पृशन्ति कवयो गिराऽपि यत् । स्वप्नवृत्तिरपि यत्र दुर्लभा लीलयैव विदधाति तद्विधिः ॥२७॥ मा धाव माधाव विनैव दैवं नो धावनं साधनमस्ति लक्ष्म्याः । चेद्धावनं साधनमस्ति लक्ष्म्याः श्वा धावमानोऽपि लभेत लक्ष्मीम् ॥ २ ॥ अन्यो धनं प्रेतगतस्य भुङ्क्ते वयांसि चाग्निश्च शरीरधातून् । द्वाभ्यामयं सह गच्छत्यमुत्र पुण्येन पापेन च वेष्टमानः ॥२९॥ अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति । जीवत्यनाथो विपिनेऽप्यरक्षितः कृतप्रयत्नोऽपि गृहे विनश्यति ॥३०॥ क्व च ननु जनकाधिराजपुत्री क्व च दशकन्धरमन्दिरे निवासः । अयि खलु विषमः पुराकृताना भवति हि जन्तुषु कर्मणां विपाकः ॥३१॥ क्व नु कुलमकलङ्कमायताक्ष्याः क्व नु रजनीचरसङ्गमापवादः । अयि खलु विषमः पुराकृतानां भवति हि जन्तुषु कर्मणा विपाकः ॥ ३२ ॥ सृजति तावदशेषगु-

पुत्राः क्षितिपतितनया धर्मभीमार्जुनाद्याः शूराः सत्यप्रतिज्ञा दृढतरवपुषः केशवेनापि गूढाः । ते वीराः पाणिपात्रे कृपणजनगृहे भिक्षुचर्यां प्रवृत्ताः को वा कार्ये समर्थो भवति विधिवशाद्भाविनी कर्मरेखा ॥ ४० ॥

## उद्यमाख्यानम् ३७

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ १ ॥ उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः । नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥ २ ॥ निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः । सोद्योगं नरमायान्ति विवशाः सर्वसम्पदः ॥ ३ ॥ वीरः सुधीः सुविद्यश्च पुरुषः पुरुषार्थवान् । तदन्ये पुरुषाकाराः पशवः पुच्छवर्जिताः ॥ ४ ॥ सिंहाः सत्पुरुषाश्चैव निजदर्पोपजीविनः । पराश्रयेण जीवन्ति कातराः शिशवः स्त्रियः ॥ ५ ॥ आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः । नास्त्युद्यमसमो बन्धुः कृत्वा यं नावसीदति ॥ ६ ॥ आरभन्तेऽल्पमेवाज्ञाः कार्यं व्यग्रा भवन्ति च । महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥ ७ ॥ अलसस्य कुतो विद्या अविद्यस्य कुतो धनम् । अधनस्य कुतो मित्रममित्रस्य कुतः सुखम् ॥ ८ ॥ उच्छास्त्रितं शास्त्रितञ्च पौरुषं द्विविधं स्मृतम् । उच्छास्त्रितमनर्थाय परमार्थाय शास्त्रितम् ॥ ९ ॥ शुभेन पुरुषार्थेन शुभमासाद्यते फलम् । अशुभेनाशुभं राम

यथेच्छसि तथा कुरु ॥ १० ॥ अनेन मर्त्यदेहेन यल्लोकद्वय-
सुखप्रदम् । विचिन्त्य तदनुष्ठेयं कर्म हेयं ततोऽन्यथा ॥ ११ ॥ न
कश्चिदपि जानाति किं कस्य श्वो भविष्यति । अतः श्वः
करणीयानि कुर्यादद्यैव बुद्धिमान् ॥१२॥ स्वभावाद्यत्नमाति
ष्ठेद्यत्नस्त्वाभावसीदति । जरामरणरोगेभ्यः प्रियमात्मानमुद्ध
रेत् ॥ १३ ॥ उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ १४ ॥ आचा-
र्याद्वाक्यमभ्यस्तैः शास्त्रसत्सङ्गमादिभिः । गुणैः पुरुषयत्नेन
स्वार्थः सम्प्राप्यते हितः ॥ १५ ॥ अनिर्वेदः श्रियो मूलं सा
यस्य च शुभस्य च । महान्त्यथात्यनिर्विण्णः सुखमानन्त्यम-
श्नुते॥१६॥शरीरनिरपेक्षस्य दक्षस्य व्यवसायिनः।बुद्धिमार
ब्धकार्यस्य नास्ति किंचन दुष्करम् ॥ १७ ॥ विद्या वितर्को
विज्ञानं स्मृतिस्तत्परता क्रिया । यस्यैते षड्गुणास्तस्य न
साऽध्यमतिवर्तते ॥ १८ ॥ शुभाशुभाभ्यां मार्गाभ्यां वहन्ती
वासना सरित् । पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥१९॥
विषमं समतां याति दूरमायाति चान्तिकम् । सलिलं स्थल
तामेति कार्यकाले महात्मनाम् ॥ २० ॥ नात्मानमवमन्येत
पूर्वाभिरसमृद्धिभिः । आमृत्योः श्रियमन्विच्छेन्नैनां मन्येत
दुर्लभाम् ॥ २१ ॥ आरभेतैव कर्माणि श्रान्तः श्रान्तः पुनः
पुनः । कर्माण्यारभमाणं हि पुरुषं श्रीर्निषेवते ॥ २२ ॥ अ
मानतविषादारम्भमचपलमकोपनम् । स्थिरारम्भमदीनञ्च नर

श्रीरुपातिष्ठते ॥ २३ ॥ यत्रोत्साहसमारम्भो यत्रालस्यविहीनता । नयविक्रमसंयोगस्तत्र श्रीरचला ध्रुवम् ॥ २४ ॥ वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु । परीक्ष्य कारिणं धीरमत्यन्त श्रीर्निषेवते ॥ २५ ॥ न त्वेवात्माऽवमन्तव्यः पुरुषेण कदाचन । नह्यात्मपरिभूतस्य भूतिर्भवति शोभना ॥२६॥ अलक्ष्मीराविशत्येनं शयानमलसं नरम् । निःसंशयं फलं लब्ध्वा दक्षो भूतिमुपाश्नुते ॥ २७ ॥ दुःखार्तेषु प्रमत्तेषु नास्तिकेष्वलसेषु च । न श्रीर्वसत्यदान्तेषु ये चोत्साहविवर्जिताः ॥२८॥ पाण्डवानां हृतं राज्यं धार्तराष्ट्रैर्महाबलैः । पुनः प्रत्याहृतश्चैव न दैवाद् भुजसंश्रयात् ॥ २९ ॥ उत्साहो बलवानार्य नास्त्युत्साहात्परं बलम् । सोत्साहस्य लोकेषु न किञ्चिदपि दुर्लभम् ॥ ३० ॥ उत्साहवन्तः पुरुषा नावसीदन्ति कर्मसु । उत्साहमात्रमाश्रित्य प्रतिलप्स्याम जानकीम् ॥ ३१ ॥ न तदस्ति जगत्यस्मिन् स्वप्नसंकल्प दुर्लभम् । यन्न सिध्यति यत्नेन धीराणां व्यवसायिनाम् ॥ ३२ ॥ अम्भोऽपि तज्ज्ञतामेति शनैः शैलोऽपि चूर्ण्यते । घुणोऽप्याप्ति महावृक्षं पश्याभ्यासविजृम्भितम् ॥ ३३ ॥ निरुत्साहस्य दीनस्य शोकपर्याकुलात्मनः । सर्वार्था व्यवसीदन्ति व्यसनञ्चाधिगच्छति ॥ ३४ ॥ यद्यत्परवशं कर्म तत्तद्यत्नेन वर्जयेत् । यद्यदात्मवशं तु स्यात्तत्तत्सेवेत यत्नतः ॥ ३५ ॥ सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् । एतद्विद्यात्समासेन

दुर्मतिः ॥४९॥ ये समुद्योगमुत्सृज्य स्थिता दैवपरायणाः ।
ते धर्ममर्थं कामञ्च नाशयन्त्यात्मविद्विषः ॥ ५० ॥ विश्वा-
मित्रेण मुनिना दैवमुत्सृज्य दूरतः । पौरुषेण तपः प्राप्तं ब्राह्म-
ण्यं राम नान्यथा ॥ ५१ ॥ पश्य कर्मवशात्प्राप्तं भोज्यका-
लेऽपि भोजनम् । हस्तोद्यमं विना वक्त्रे प्रविशेन्न कथञ्चन
॥ ५२ ॥ यो हि दिष्टमुपासीनो निर्विचेष्टः सुखं शयेत् ।
अवसीदेत्स दुर्बुद्धिरामो घट इवोदके ॥ ५३ ॥ न दैवमिति
संचिन्त्य त्यजेदुद्योगमात्मनः । अनुद्यमेन कस्तैलं तिलेभ्यः
प्राप्तुमर्हति ॥५४॥ विहाय पौरुषं यो हि दैवमेवावलम्बते ।
प्रासादसिंहवत्तस्य मूर्ध्नि तिष्ठन्ति वायसाः ॥ ५५ ॥ पूर्व-
जन्मकृतं कर्म तद्दैवमिति कथ्यते । तस्मात्पुरुषकारेण विना
दैवं न सिध्यति ॥ ५६ ॥ प्राक्कर्मवशतः सर्वं भवतीति नि-
श्चितम् । तदोपदेशा व्यर्थाः स्युः कार्याकार्यप्रबोधकाः॥५७॥
धीमन्तो वन्द्यचरिता मन्यन्ते पौरुषं महत् । अशक्ताः पौरुषं
कर्तुं क्लीबा दैवमुपासते ॥ ५८ ॥ भोक्ता तृप्यति नाभोक्ता
गन्ता गच्छति नागतिः। वक्ता वक्ति न चावक्ता पौरुषं सफलं
नृणाम् ॥५९॥ दैवमेवेह चेत्कर्तृ पुंसः किमिव चेष्टया । स्ना-
नदानासनोच्चारान्दैवमेव करिष्यति ॥ ६० ॥ कालविद्भि-
र्विनिर्णीता यस्यास्ति चिरजीविता । स चेज्जीवति संछि-
न्नशिरास्तद्दैवमुत्तमम् ॥ ६१ ॥ आलस्यं स्त्रीसेवा सरोगता
जन्मभूमिवात्सल्यम् । सन्तोषो भीरुत्वं षड्व्याघाता महत्त्व-

सूर्योदये चास्तमये च शायिनं विमुञ्चति श्रीरपि चक्रपाणि-नम् ॥ ७३ ॥ अर्थः सुखं कीर्तिरपीह माभूदनर्थ एवास्तु तथापि धीराः । निजप्रतिज्ञामधिरुह्यमाना महोद्यमाः कर्म स-मारभन्ते ॥ ७४ ॥ आरभ्यते न खलु विघ्नभयेन नीचैः प्रा-रभ्य विघ्नविहता विरमन्ति मध्याः । विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारभ्य चोत्तमजना न परित्यजन्ति ॥ ७५॥ उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवं प्रधानमिति कापुरुषा वदन्ति । दैवं विहाय कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ ७६ ॥

## अन्योक्तयः ३८

अस्ति यद्यपि सर्वत्र नीरं नीरजमण्डितम् । रमते न मरालस्य मानसं मानसं विना ॥ १ ॥ एकेन राजहंसेन या शोभा सरसो भवेत् । न सा बकसहस्रेण परितस्तीरवासिना ॥ २ ॥ हंसः श्वेतो बकः श्वेत को भेदो बकहंसयोः । नीर-क्षीरविभागे तु हंसो हंसो बको बकः ॥ ३ ॥ अम्भोजिनी-वननिवासविलासमेव हंसस्य हन्ति नितरां कुपितो विधाता। न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः॥ ४ ॥ यत्रापि कुत्रापि गता भवन्ति हंसा महीमण्डल-मण्डनाय । हानिस्तु तेषां हि सरोवराणां येषां मरालैः सह विप्रयोगः ॥ ५ ॥ सुभाषितस्याध्ययनानुसक्तं शुकं वराकाः प्रहसन्ति काकाः । तमेव संसत्सु गिरं किरन्तं दृष्ट्वा भवन्ति

मपया नतास्याः ॥६॥ मर्न मद्रं कृतं मान काकिलेऽनम्या-गमे । बकारो दर्दुरा यत्र तत्र मौनं हि शोभते ॥७॥ कल कण्ठ यथा शोभा सहकार मवाङ्कुरः । खदिरे वा पलाशे वा किमवा स्यादृपारय ॥८॥ काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः । वसन्तसमये प्राप्ते काकः काकः पिकः पिकः ॥ ९ ॥ कोकिलोऽड यवान्कावः ममानः काकिमा ऽऽश्रयाः । अन्तर कथयिष्यन्ति काकलीकोविदा जनाः ॥ १० ॥ तवैतद्वापि मापुयज्ञान कं किल कृत्रिमम् । मपा पितो पैस्तानन भावपसा महापि पत ॥ ११ ॥ मस्मिन्नेवेष मन्नस्ते नीचै काककुलैः पिक ।-श्रुतिमृपकानिहाये । स्ताप नीपसदा पदैः ॥ १२ ॥ रे रे कोकिल मा भज मौनं किञ्चिदुदञ्चय पञ्चमरागम् । नो चेत्त्वामिह को जानीते काककदम्बकपिहिते चूते ॥१३॥ अस्यां मखे बधिरलोकनि वासभूमौ किं कूजितेन खलु कोकिल कामलेन । एवं हि दैवहतकास्तदभिन्नवर्णन्त्वां काकमेव कलयन्ति कलानभिज्ञाः ॥ १४ ॥ मवस्यकारणैः माणान्धारयसेव चातकः । मार्थ नामग्रमीता हि मकावापि न याचते ॥ १५ ॥ रे रे चातक सावधानमनसा मित्र क्षणं श्रूयतामम्भोदा बहवो वसन्ति गगने सर्वेऽपि नैतादृशाः । केचिद्वृष्टिभिरार्द्रयन्ति धरणीं गर्जन्ति केचिद्वृथा यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ॥ १६ ॥ आमरणादपि विरतं कुर्वाणाः सर्वथा

सह मयूरैः । किं जानन्ति वराकाः काकाः केकारवं कर्तुम् ॥ १७ ॥ काकस्य गात्रं यदि काञ्चनस्य माणिक्यरत्नं यदि चञ्चुदेशे । एकैकपक्षे ग्रथितं मणीनां तथापि काको न तु राजहंसः ॥ १८ ॥ अनुसरति करिकपोलं भ्रमरः श्रवणेन ताड्यमानोऽपि । गणयति न तिरस्कारं दानान्धविलोचनो नीचः ॥ १९ ॥ अलिरयं नलिनीदलमध्यगः कमलिनीमकरन्दमदालसः । विधिवशात्परदेशमुपागतः कुटजपुष्परसं बहु मन्यते ॥ २० ॥ रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः । इत्थं विचिन्तयति कोशगते द्विरेफे हा मूलतः कमलिनीं गज उज्जहार ॥ २१ ॥ दानार्थिनो मधुकरा यदि कर्णतालैर्दूरीकृताः करिवरेण मदान्धबुद्ध्या । तस्यैव गण्डयुगमण्डनहानिरेषा भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥ २२ ॥ एकोऽहमसहायोऽहं कृशोऽहमपरिच्छदः । स्वप्नेऽप्येवंविधा चिन्ता मृगेन्द्रस्य न जायते ॥ २३ ॥ नाभिषेको न संस्कारः सिंहस्य क्रियते वने । विक्रमार्जितसत्त्वस्य स्वयमेव मृगेन्द्रता ॥ २४ ॥ जीर्णोऽपि क्रमहीनोऽपि कृशोऽपि यदि केसरी । तथापि यूथनाथस्य शङ्कातङ्काय कल्पते ॥ २५ ॥ बन्धनस्थो हि मातङ्गः सहस्रभरणक्षमः । अपि स्वच्छन्दचारी श्वा स्वोदरेणापि दुःखितः ॥ २६ ॥ मलोत्सर्गं गजेन्द्रस्य मूर्ध्नि काकः करोति चेत् । कुलानुरूपं तत्तस्य यो गजो गज एव सः

॥२७॥ सोगुणपाकनयपथरणामपार्तं भूमौ निपत्य मदनोर रदर्पनम्र । न्या पिष्टदस्य कुरुते गमपुङ्गवस्तु धीरो विलोकयति पादपतैश्च मुग्धे ॥ २८ ॥ दूर्वाङ्कुरतृणाहारा धन्या स्तात वने मृगाः । विभवोन्मत्तभूपानां न पश्यन्ति मुखानि यत् ॥२९॥ यद्यपि का नो हानिः परकीयां चरति रासभो द्राक्षाम् । असमञ्जसमिति मत्वा तथापि खिद्यते चेतः ॥ ३० ॥ छायामन्यस्य कुर्वन्ति तिष्ठन्ति स्वयमातपे । फलान्यपि परार्थाय वृक्षाः सत्पुरुषा इव ॥ ३१ ॥ पत्रपुष्पफलच्छायामूलवल्कलदारुभिः । धन्या महीरुहा येभ्यो निराशा यान्ति नार्थिनः ॥ ३२ ॥ सेवितव्यो महावृक्षः फलच्छायासमन्वितः । यदि दैवात्फलं नास्ति छाया केन निवार्यते ॥ ३३ ॥ रोलम्बैर्न विलम्बितं विघटितं धूमाङ्कुरैः कोकिलैः मायूरैरपि च दूरेण रभसात्कीरैः धीरैर्गतम् । एकेनापि सुपल्लवेन तरुणा दावानलोपप्लुतः सावः को न विपद् मुञ्चति सता मूर्ध्नापि या लालितः ॥ ३४ ॥ नीरसान्यपि रोचन्ते कार्पासस्य फलानि मे । येषां गुणमयं जन्म परेषां गुह्यगुप्तये ॥३५॥ रत्नैरापूरितस्यापि महत्क्षोभोऽस्ति नाम्बुधेः । मुक्ताः कतिपयाः प्राप्य मातङ्गा मदविह्वलाः ॥३६॥ अय रत्नाकरोऽम्बुधिरिति सेवितो धनाशया । धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः ॥ ३७ ॥ यथा करोपि यत्नं मूष्णा वा रयक्षे वृषभ । सोपस्त्वैव मनुजे रत्न सर्वं सुवर्णमूल्य ॥३८

वातोल्लासितकल्लोल धिक्ते सागर गर्जनम् । यस्य तीरे तृषाक्रान्तः पान्थः पृच्छति वापिकाम् ॥ ३९ ॥ अगाधेनापि किन्तेन तोयेन लवणाम्बुधेः । जानुमात्रं वरं वारि तृष्णाच्छेदकरं नृणाम ॥ ४० ॥ किं खलु रत्नैरेतैः किं पुनरभ्रायितेन वपुषा ते । सलिलमपि यन्न तावकमर्णव वदनं प्रयाति तृषितानाम् ॥ ४१ ॥ तृषां धरायाः शमयत्यशेषां यः सोऽम्बुदो गर्जति गर्जतूच्चैः । यस्त्वेव कस्यापि न हन्ति तृष्णां स किं वृथा गर्जति निस्त्रपोऽब्धिः ॥ ४२ ॥ कतिपयदिवसस्थायी पूरो दूरोन्नतोऽपि भविता ते । तटिनि तटद्रुमपातनपातकमेकं चिरस्थायि ॥ ४३ ॥ यास्यति जलधरसमयस्तव च समृद्धिर्लघीयसी भविता । तटिनि तटद्रुमपातनपातकमेकं चिरस्थायि ॥४४॥ छायां प्रकुर्वन्ति नमन्ति पुष्पैः फलानि यच्छन्ति तटद्रुमा ये । उन्मूल्य तानेव नदी प्रयाति तरङ्गिणी क प्रतिपन्नमस्ति ॥ ४५ ॥ चातकः स्वानुमानेन जलं प्रार्थयतेऽम्बुदात् । स स्वौदार्यतया सर्वां प्लावयत्यम्बुना महीम् ॥ ४६ ॥ आश्रयः क्रियतामेष तरुः सन्मार्गमाश्रितः । पाथोद सिच्यतां काले नोपेक्ष्यो दूरभावतः ॥ ४७ ॥ एकस्य तस्य मन्ये धन्यामभ्युन्नतिं जलधरस्य । विश्वं सशैलकाननमाननमवलोकते यस्य ॥ ४८ ॥ मुञ्च मुञ्च सलिलं दयानिधे नास्ति नास्ति समयो विलम्बने । अद्य चातककुले मृते पुनर्वारि वारिधर किं करिष्यसि ॥ ४९ ॥ गर्जसि मेघ न

रतिरेको लाभः परं तव मुखे खलु भस्मपातः ॥ ५९ ॥ कन-कभूषणसंग्रहणोचितो यदि मणिस्त्रपुणि प्रणिधीयते । न स विरौति न चापि स शोभते भवति योजयितुर्वचनीयता॥६०॥

## स्वर्गनरकगतिवर्णनम् ३९

परुषाः पिशुनाश्चैव मानिनोऽनृतवादिनः । अनिबद्ध-प्रलापाश्च नरा निरयगामिनः ॥ १ ॥ ये परस्वापहर्तारस्त-द्गुणानामसूयकाः । पराश्रियाऽभितप्यन्ते ते वै निरयगामिनः ॥ २ ॥ कूपानाञ्च तडागानां प्रपानाञ्च परन्तप । रथ्यानाञ्चैव भेत्तारस्ते वै निरयगामिनः ॥ ३ ॥ विसृज्यादान्ति ये दारान् शिशून् भृत्यातिथींस्तथा । उत्सन्नपितृदेवज्यास्ते वै निरयगामिनः ॥ ४ ॥ यतीनां दूषका राजन् सतीनां दूष-कास्तथा । वेदानां दूषकाश्चैव ते वै निरयगामिनः ॥ ५ ॥ आद्यं पुरुषमीशानं सर्वलोकमहेश्वरम् । न चिन्तयन्ति ये विष्णु ते वै निरयगामिनः ॥ ६ ॥ काष्ठैर्वा शङ्कुभिर्वापि कण्टकैरुपलैस्तथा । पन्थानं येऽत्ररुन्धन्ति ते वै निरयगामिनः ॥ ७ ॥ क्षेत्रवृत्तिगृहच्छेदं प्रीतिच्छेदञ्च ये नराः । आशाच्छेदं प्रकुर्वन्ति ते वै निरयगामिनः ॥ ८ ॥ आशया समनुप्राप्तान् क्षुत्तृषाश्रमकर्षितान् । येऽतिथीनवमन्यन्ते ते वै निरयगामिनः ॥ ९ ॥ मद्यमांसरताश्चैव गीतवाद्यरताश्च ये । द्यूतसङ्गरता-श्चैव ते वै निरयगामिनः ॥ १० ॥ अनाथं कृपणं दीनं रोगार्त्तं वृद्धमेव च । नानुकम्पन्ति ये मूढास्ते वै निरय-

गामिनः ॥ २४ ॥ मनसश्चेन्द्रियाणाञ्च नित्यं संयमने रताः। त्यक्तशोकभयक्रोधास्ते नराः स्वर्गगामिनः ॥ २५ ॥ कर्मणा मनसा वाचा नोपतापयते परम्। सर्वथा शुद्धभावो यः स याति त्रिदिवं नरः ॥ २६ ॥ परस्वे निर्ममा नित्यं परदार-विवर्जकाः। धर्मलब्धार्थभोक्तारस्ते नराः स्वर्गगामिनः ॥ २७ ॥ आत्महेतोः परार्थे वा नर्महास्याश्रयात्तथा। ये मृषा न वदन्तीह ते नराः स्वर्गगामिनः ॥ २८ ॥ पिशुनां ये न भाषन्ते मित्रभेदकरीं गिरम्। ऋतं मैत्रन्तु भाषन्ते ते नराः स्वर्गगामिनः ॥ २९ ॥ ये वर्जयन्ति परुषं परद्रोहञ्च मा-नवाः। सर्वभूतसमा दान्तास्ते नराः स्वर्गगामिनः ॥ ३० ॥ असत्प्रलापाद्विरता विरुद्धपरिवर्जकाः। सौम्यप्रलापिनो ये च ते नराः स्वर्गगामिनः ॥ ३१ ॥ श्रुतवन्तो दयावन्तः शुचयः सत्यसङ्गराः। स्वैरर्थैः परिसन्तुष्टास्ते नराः स्वर्ग-गामिनः ॥३२॥ श्रद्धावन्तो दयावन्तश्चोक्षाश्चोक्षजनप्रियाः। धर्माधर्मविदो नित्यं ते नराः स्वर्गगामिनः ॥ ३३ ॥ न कोपाद्व्याहरन्ते ये वाचं हृदयदारिणीम्। शान्तं वदन्ति क्रुद्धाऽपि ते नराः स्वर्गगामिनः ॥ ३४ ॥ सर्वहिंसानिवृत्ता ये नराः सर्वसहाश्च ये। सर्वस्याश्रयभूताश्च ते नराः स्वर्ग-गामिनः ॥ ३५ ॥ मातृवत् स्वसृवच्चैव नित्यं दुहितृवच्च ये। परदारेषु वर्तन्ते ते नराः स्वर्गगामिनः ॥ ३६ ॥ शुश्रूषाभि-स्तपोभिश्च श्रुतमादाय भारत। ये प्रतिग्रहनिस्नेहास्ते नराः

वै यदा । किं पल्वले मत्स्य इव सुखं स्वपिषि पुत्रक ॥१०॥ तुल्यजातिवयोरूपान्हतान्पश्यसि मृत्युना । कथं ते नास्ति निर्वेदो लौह हि हृदयं तव ॥ ११ ॥ किं श्रिया किञ्च राज्येन किं कामेन क्रियीहितैः । दिनैः कतिपयैरेव कालः सर्वं निकृन्तति ॥ १२ ॥ न चास्त्रेण न शौर्येण तपसा मेधया न च । न धृत्या न पुनस्त्यागान्मृत्योः कश्चिद्विमुच्यते ॥१३॥ अनतिक्रमणीयो वै विधिरेष युधिष्ठिर । देवदानवगन्धर्वान्मृत्युर्हरति भारत ॥ १४ ॥ दुर्बलं बलवन्तञ्च शूरं भीरुं जडं कविम् । अप्राप्तं सर्वकामार्थान्मृत्युरादाय गच्छति ॥ १५ ॥ महाविद्योऽल्पविद्यश्च बलवान्दुर्बलश्च यः । दर्शनीयो विरूपश्च सुभगो दुर्भगश्च यः ॥ १६ ॥ सर्वं कालः समादत्ते गम्भीरः स्वेन तेजसा । तस्मिन्कालवशं प्राप्ते का व्यथा मे विजानतः ॥ १७ ॥ इदमद्य करिष्यामि श्वः कर्ताऽस्मीति वादिनम् । कालो हरति संप्राप्तो नदीवेग इव द्रुमम् ॥ १८ ॥ इदानीं तावदेवासौ मया दृष्टः कथं मृतः । इति कालेन ह्रियतां प्रलापः श्रूयते नृणाम् ॥ १९ ॥ नश्यन्त्यर्थास्तथा भोगाः स्थानमैश्वर्यमेव च । जीवितं जीवलोकस्य कालेनागम्य नीयते ॥ २० ॥ नाकाले म्रियते जन्तुर्विद्धः शरशतैरपि । तृणाग्रेण सुसंस्पृष्टः प्राप्तकालो न जीवति ॥ २१ ॥ न मन्त्रा न तपो दानं न मित्राणि न बान्धवाः । शक्नुवन्ति परित्रातुं नरं कालेन पीडितम् ॥ २२ ॥ यथा

म्यात्मकस्योऽपि मेको दृष्टानपक्षेतोऽथवा कालाग्निना ग्रस्तो लोको भोगानसाम्प्रतम् ॥ २३ ॥ सेनापत्यमुद्दालकमन्यत्र मतमानसम् । स्त्रीबोरणमासाद्य मृत्युरादाय गच्छति ॥२४॥ न कालस्य प्रियः कश्चिद्द्वेष्यश्चास्य न विद्यते । आयुष्ये कर्मणि क्षीणे प्रसह्य हरते जनम् ॥ २५ ॥ हा कान्ते हा धनं पुत्राः क्रन्दमानः सुदारुणम् । मण्डूक इव सर्पेण मृत्युना नीयते नरः ॥ २६ ॥ यस्य वा मृत्युना सख्यं यो वा स्यादजरामरः । तस्यैव युज्यते वक्तुमिदं श्वो मे भविष्यति ॥ २७ ॥ बलिनो मृत्युसिंहस्य संसारवनचारिणः । भ्रमन् व्याधिजरानादान् कथं तिष्ठामि निर्भयः ॥ २८ ॥ दृढवर्णाः षोडशिका त्रिंशद्विंशतिकास्तथा । सर्वे वर्षशतादूर्ध्वं न भविष्यन्ति मानवाः ॥ २९ ॥ स्वयमस्तकसमारूढं मृत्युं पश्येज्जना यदि । आहारोऽपि न रोचेत किमुतान्या विभूतयः ॥३०॥ को मोदते किमाश्चर्यं कः पन्थाः का च वार्तिका । वद मे चतुरः प्रश्नान्मृता जीवन्तु बान्धवाः ॥ ३१ ॥ पञ्चमेऽहनि षष्ठे वा शाकं पचति यो गृहे । अनृणी चाप्रवासी च स वारिचर मोदते ॥ ३२ ॥ अहन्यहनि भूतानि गच्छन्तीह यमालयम् । शेषाः स्थावरमिच्छन्ति किमाश्चर्यमतः परम् ॥ ३३ ॥ तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नैको ऋषिर्यस्य मतं प्रमाणम् । धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥ ३४ ॥ अस्मिन्महामोहमये

कटाहे सूर्याग्निना रात्रिदिवेन्धनेन । मासर्तुदर्वीपरीघट्टनेन भूतानि कालः पचतीति वार्ता ॥ ३५ ॥ अशनं मे वसनं मे जाया मे बन्धुवर्गो मे । इति मे मे कुर्वाणं कालवृको हन्ति पुरुषाजम् ॥३६॥ महाबलान् पश्य महाऽनुभावान् प्रशास्य भूमिं धनधान्यपूर्णाम् । राज्यानि हित्वा विपुलांश्च भोगान् गतान्नरेन्द्रान्वशमन्तकस्य ॥ ३७॥ विद्राविते शत्रुजने समस्ते समागतायामभितश्च लक्ष्म्याम् । सेव्यन्त एतानि सुखानि यावत्तावत्समायाति कुतोऽपि मृत्युः ॥३८ ॥ चला विभूतिः क्षणभङ्गि यौवनं कृतान्तदन्तान्तर्वर्ति जीवितम् । तथाऽप्यवज्ञा परलोकसाधने नृणामहो विस्मयकारि चेष्टितम् ॥३९॥ प्राप्ता जरा यौवनमप्यतीतं बुधा यतध्वं परमार्थसिद्ध्यै। आयुर्गतप्रायमिदं यतोऽसौ विश्राम्य विश्राम्य न याति कालः ॥ ४० ॥ भगीरथाद्याः सगरः ककुत्स्थो दशाननो राघवलक्ष्मणौ च । युधिष्ठिराद्याश्च बभूवुरेते सत्यं क्व याता बत ते नरेन्द्राः ॥ ४१ ॥ मा कुरु धनजनयौवनगर्वं हरति निमेषात्कालः सर्वम् । मायामयमिदमखिलं हित्वा ब्रह्मपदं प्रविशाशु विदित्वा ॥ ४२ ॥ आराध्य भूपतिमवाप्य ततो धनानि भुञ्जामहे वयमिह प्रसभं सुखानि। इत्याशया बत विमोहितमानसानां कालो जगाम मरणावधिरेव पुंसाम् ॥ ४३ ॥ संचिन्त्य संचिन्त्य तमुग्रदण्डं मृत्युं मनुष्यस्य विचक्षणस्य । वर्षाम्बुसिक्ता इव चर्मबन्धाः सर्वे प्रयत्नाः शिथिलीभवन्ति

युजे वां ब्रह्म पूर्व्यं नमोभिर्विश्लोक एतु पथ्येव सूरेः। शृण्वन्तु विश्वे अमृतस्य पुत्रा आये धामानि दिव्यानि तस्थुः ॥ १ ॥ यं विनिद्रा जितश्वासाः सत्त्वस्थाः सयतेन्द्रियाः। ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ २ ॥ अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः। शान्ताः संन्यासिनो यान्ति तस्मै मोक्षात्मने नमः ॥ ३ ॥ अश्वमेधसहस्राणि राजसूयशतानि च। ध्यानयोगस्य सर्वाणि कलां नार्हन्ति षोडशीम् ॥ ४ ॥ बुद्ध्या भयं प्रणुदति तपसा विन्दते महत्। गुरुशुश्रूषया ज्ञानं शान्तिं योगेन विन्दति ॥ ५ ॥ यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह। बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम् ॥ ६ ॥ तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्। अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ ७ ॥ इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम्। अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥८॥ आत्मज्ञानेन मुक्तिः स्यात्तच्च योगादृते नहि। स च योगश्चिरं कालमभ्यासादेव सिद्ध्यति ॥९॥ गृहस्थानां सहस्रेण वानप्रस्थशतेन च। ब्रह्मचारिसहस्रेण योगाभ्यासी विशिष्यते ॥ १० ॥ कृतार्थौ पितरौ तेन धन्यो देशः कुलञ्च तत्। जायते योगवान्यत्र दत्तमक्षय्यतां व्रजेत् ॥ ११ ॥ जैगीषव्यो यथा विप्रो यथा चैवासितादयः। क्षत्रिया जनकादयस्तु तुलाधारादयो विशः

॥ १२ ॥ सम्प्राप्ताः परमां सिद्धिं पूर्वाभ्यस्तस्य योगतः । धर्म-
व्याधादयश्चैव शूद्राः पैलवकादयः ॥ १३ ॥ मैत्रेयी सुलभा
गार्गी शाण्डिली च तपस्विनी । एते चान्ये च बहवो
नीचयोनिगता अपि । ज्ञाननिष्ठां परां प्राप्ताः पूर्वाभ्यस्तस्य
योगतः ॥ १४ ॥ तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि
मतोऽधिकः । कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन
॥ १५ ॥ इहामुत्र विरक्तस्य संसार भमितासतः । जिज्ञासो-
रेव कस्यापि योगेऽस्मिन्नधिकारिता ॥ १६ ॥ यमश्च नियम-
श्चैव तृतीयमासनं मतम् । प्राणायामस्तथा गार्गि प्रत्याहारश्च
धारणा । ध्यानं समाधिरेतानि योगाङ्गानि निबोध मे ॥ १७ ॥
ब्रह्मचर्यमहिंसा च सत्यास्तेयापरिग्रहान् । सेवेत योगी
निष्कामो योग्यतां मनसो नयन् ॥ १८ ॥ कर्मणा मनसा
वाचा परद्रव्येषु निःस्पृहा । अस्तेयमिति सम्प्रोक्तमृषिभिस्त-
त्त्वदर्शिभिः ॥ १९ ॥ परमापद्गतेनापि न कार्यः स्तेयमल्पकः
। स्तेयादभ्यधिकः कश्चिन्नास्त्यधर्म इति स्मृतः ॥ २० ॥ स्वा-
ध्यायशौचसन्तोषतपांसि नियतात्मवान् । कुर्वीत ब्रह्मणि
तथा परस्मिन् प्रवणं मनः ॥ २१ ॥ द्वे ब्रह्मणी वेदितव्ये
शब्दब्रह्म परञ्च यत् । शब्दब्रह्मणि निष्णातः परं ब्रह्मा-
धिगच्छति ॥ २२ ॥ शौचन्तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं
तथा । मृज्जलाभ्यां स्मृतं बाह्यं मनःशुद्धिस्तथान्तरम् ॥ २३ ॥
सर्वेषामेव शौचानामन्तःशौचं परं स्मृतम् । योऽन्तःशुद्धिर्हि

स शुचिर्न मृद्वारिशुचिः शुचिः ॥२४॥ मृत्तिकानां सहस्रैस्तु जलकुम्भशतैरपि । न शुद्ध्यन्ति दुरात्मानो येषां भावो न निर्मलः ॥ २५ ॥ न शरीरमलत्यागान्नरो भवति निर्मलः । मानसे तु मले त्यक्ते भवत्यन्तः सुनिर्मलः ॥ २६ ॥ नोदकक्लिन्नगात्रस्तु स्नात इत्यभिधीयते । स स्नातो यो दमस्नातः स बाह्याभ्यन्तरः शुचिः ॥ २७ ॥ मनसश्चेन्द्रियाणाञ्च निग्रहः परमन्तपः । स ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥ २८ ॥ मासपक्षोपवासेन मन्यन्ते यत्तपो जनाः । आत्मविद्योपघातस्तु न तपस्तत्सतां मतम् ॥ २९ ॥ एकान्ते विजने देशे पवित्रे निरुपद्रवे । कम्बलाजिनवस्त्राणामुपर्यासनमभ्यसेत् ॥ ३० ॥ शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ३१ ॥ वक्त्रेणोत्पलनालेन तोयमाकर्षयेन्नरः । एवं वायुर्गृहीतव्यः पूरकस्येति लक्षणम् ॥ ३२ ॥ उत्क्षिप्य वायुमाकाशं शून्यं कृत्वा निरात्मकम् । शून्यभावेन युञ्जीयाद्रेचकस्येति लक्षणम् ॥ ३३ ॥ नोच्छ्वसेन्न च निःश्वसेन्नैव गात्राणि चालयेत् । एवं तावन्नियुञ्जीत कुम्भकस्येति लक्षणम् ॥ ३४ ॥ शब्दादिभ्यः प्रवृत्तानि यदक्षाणि यतात्मभिः । प्रत्याह्रियन्ते योगेन प्रत्याहारस्ततः स्मृतः ॥ ३५ ॥ इन्द्रियाणां विचरतां विषयेषु स्वभावतः । बलदाहरणं तेषां प्रत्याहारः स उच्यते ॥ ३६ ॥ देशबन्धस्तु चित्तस्य धारणेति प्रकीर्तिता ।

ध्यानध्येयेन सा ज्ञेया या ममैकतानता ॥ ३७ ॥
सलिले सैन्धवं यद्वत्साम्यं भजति योगतः । तथात्ममनसो
रैक्यं समाधिरभिधीयते ॥ ३८ ॥ राजत्वात्सर्वयोगानां
राजयोग इति स्मृतः । राजन्तं दीप्यमानं तं परमात्मान-
मव्ययम् । प्रापयेद्देहिनं यस्तु राजयोगः स कीर्तितः ॥
३९ ॥ सर्वधर्मानिमान्प्राहुः समाधिं योगवित्तमाः । सर्वेषां
यतो धर्मामृतधाराः स्रवन्ति ॥ ४० ॥ नात्यश्नतस्तु
योगोऽस्ति न चैकान्तमनश्नतः । न चातिस्वप्नशीलस्य जा-
ग्रतो नैव चार्जुन ॥ ४१ ॥ युक्ताहारविहारस्य युक्तचेष्टस्य
कर्मसु । युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ ४२ ॥
सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्यो
मित्येतत् ॥ ४३ ॥ धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासा
निशितं सन्धयीत । आयम्य तद्भावगतेन चेतसा लक्ष्यं तदे
वाक्षरं सोम्य विद्धि ॥ ४४ ॥ प्रणवो धनुः शरो ह्यात्मा ब्रह्म
तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥४५॥
यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः ।
तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष
सेतुः ॥ ४६ ॥ न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवै
स्तपसा कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं प
श्यते निष्कलं ध्यायमानः ॥ ४७ ॥ युञ्जीत प्रणवे चेतः

प्रणवो ब्रह्म निर्भयम् । प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥४८॥ स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनाभ्यासादेवं पश्येन्निगूढवत् ॥४९॥ समाधि-निर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत् । न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते ॥५० ॥ यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् । अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ ५१ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यपण्डित श्रीस्वामी-अच्युतानन्द सरस्वतीति नामधेये संगृहीतायां व्याख्यानमालायां पूर्वार्धं समाप्तम् ॥

## उत्तरार्धे विवेकः ४२

ओ३म् ॥ वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ १ ॥ यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ २ ॥ यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ३ ॥ प्रतिबोधविदितं मतममृतत्वं हि विन्दते । आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥४॥ मुक्तिमिच्छसि चेत्तात विषयान्विषवत्त्यज । क्षमाऽऽर्जवदयाशौचं सत्यं पीयूषवत्पिब ॥ ५ ॥ यस्मान्मोक्षसुखादन्यत्सुखं क्वापि न विद्यते । तस्मान्मुमुक्षुणा भाव्यं नैव भो-

गेष्पुना कथित ॥ ६ ॥ कतव्यमेव कर्तव्यं प्राणैः कण्ठगतै रपि । अकतव्य न कर्तव्य प्राणैः कण्ठगतैरपि ॥ ७ ॥ एकाकी चिन्तयेन्नित्यं विविक्ते हितमात्मनः । एकाकी चिन्तयाना हि परं श्रेयोऽधिगच्छति ॥८॥ मनुष्यम्म मद्यम मास्त्रेभ्यः कुशला नरः । सवतः सारमादद्यात्पुष्पेभ्य इव षट्पदाः ॥ ९ ॥ यो हि न कुरुते पाप सर्वभूतेषु कर्हिचित्। कर्मणा मनसा वाचा स ब्रह्म कथ्यते बुधैः ॥ १० ॥ यश्च मूढतमो लोके यश्च बुद्धेः परं गतः । द्वावपि सुखमेधेते क्लिश्यत्यन्तरितो जनः ॥ ११ ॥ उत्थायोत्थाय बोद्धव्य महद्भयमुपस्थितम् । मरणव्याधिदुःखानां किमद्य निपतिष्यति ॥ १२ ॥ न हं पश्यामि कालेऽस्मिन्यो न जातो मरिष्यति । इति सततं बुद्ध्वा स्वस्थेस्तु कथमास्यते ॥ १३ ॥ नव्या वयो नच यमः श्रेयः प्राप्तु प्रतीक्षते । यावदेव भवेत्काल स्तावच्छ्रेयः समाचरेत् ॥ १४॥ यावच्च ग्रस्यसे रामैर्यावद्योपैति ते जरा । यावच्च क्षीयते चायुस्तावच्छ्रेयः समाचर ॥ १५ ॥ स च त पुत्रदारेषु कतव्या मतिरीदृशी । कथन्तु कृपणा ह्येव वर्तिष्यन्ते मया विना ॥ १६ ॥ यद्यर्थे पाकयत्नेन यत्र मं वर्षयन्नपि । तदेवास्य स्वकं कर्म सुखदुःखोपपादने ॥१७॥ स्वकृतैर्जायते जन्तुः स्वकृतैरेव वर्धते । सुखदुःखे तथा मर्त्यं स्वकृतैरेव विन्दति ॥ १८॥ कोऽहं क च गमिष्यामि कस्मात् किमिहागतः । का बन्धुर्मम कस्याहमिमामात्मन्विचिन्तय

॥ १९ ॥ पुरासीत्व स्वजनस्तेऽन्यः साम्प्रतं वर्तते परः ।
देहान्ते भविता चान्यस्तस्मात्त्वं परतः परः ॥ २० ॥ विवेक
एव व्यसनं पुंसां क्षपयितुं क्षमः । अपहर्तुं समर्थोऽसौ रवि-
रेव निशातमः ॥ २१ ॥ नानृतात्पातकं किञ्चिन्न सत्यात्सु-
कृतं परम् । विवेकान्न परो बन्धुरिति वेदविदो विदुः ॥
२२ ॥ आत्मानं विन्दते येन सर्वभूतगुहाशयम् । श्लोकेन
यदि वाऽर्धेन क्षीणं तस्य प्रयोजनम् ॥ २३ ॥ प्राप्य चा-
प्युत्तमं जन्म लब्ध्वा चेन्द्रियसौष्ठवम् । न वेत्त्यात्महितं यस्तु
स भवेदात्मघातकः ॥ २४ ॥ मोक्षद्वारे द्वारपालाश्चत्वारः
परिकीर्तिताः । शमो विचारः सन्तोषश्चतुर्थः साधुसङ्गमः ॥
२५॥संतोषः साधुसङ्गश्च विचारोऽथ शमस्तथा । एत एव भवा-
म्भोधावुपायास्तरणे नृणाम् ॥ २६ ॥ सन्तोषः परमो लाभः
सत्सङ्गः परमा गतिः । विचारः परमं ज्ञानं शमो हि परमं
सुखम् ॥ २७ ॥ आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च ॥२८॥ इन्द्रियाणि
हयानाहुर्विषयांस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्ते-
त्याहुर्मनीषिणः ॥ २९ ॥ यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा
सदा । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ ३० ॥
यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा । तस्येन्द्रियाणि
वश्यानि सदश्वा इव सारथेः ॥ ३१ ॥ यस्त्वविज्ञानवान्
भवत्यमनस्कः सदाऽशुचिः । न स तत्पदमाप्नोति संसार-

नाधिगच्छति ॥ ३२ ॥ यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः । स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ ३३ ॥ विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमम्पदम् ॥ ३४ ॥ सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि । सर्वं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥ ३५ ॥ त्यज दुर्जनसंसर्गं भज साधुसमागमम् । कुरु पुण्यमहोरात्रं स्मर नित्यमनित्यताम् ॥३६॥ यस्मात् संस्कृतमन्नाद्यं सद्यो विनश्यति । तदीयरस मिथ्यभे काये का नाम नित्यता ॥३७॥ सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः । शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥ ३८ ॥ जलमग्निर्विषं शस्त्रं क्षुद्व्याधिः पतनं गिरेः । निमित्तं किञ्चिदासाद्य देही प्राणान्विमुञ्चति ॥ ३९ ॥ एता याः प्रेक्षसे लक्ष्मीश्चलच्चामरचञ्चलाः । स्वप्न एव महाबुद्धे दिनानि त्रीणि पञ्च वा ॥ ४० ॥ एकोऽद्य म्रियते पश्चादन्ये पुनः परे । सर्वे निस्सीमि संसारे यास्यन्ति कः केन शोच्यते ॥ ४१ ॥ अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत । अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ ४२ ॥ पञ्चभिर्निर्मिते देहे पञ्चत्वञ्च पुनर्गते । स्वां स्वां योनिमनुप्राप्ते तत्र का परिदेवना ॥ ४३ ॥ एकसार्थप्रयातानां सर्वेषां तत्र गामिनाम् । यद्येकस्त्वरितो याति तत्र का परिदेवना ॥ ४४ ॥ अकाण्डपातजातानामस्त्राणां मर्मभेदिनाम् । गाढशोक

महाराणामचिन्तैव महौषधम् ॥४५॥ अज्ञानं कारणं न स्या-द्वियोगो यदि कारणम्।शोको दिनेषु गच्छत्सु वर्द्धतामपयाति किम् ॥ ४६ ॥ दुःखी दुःखाधिकान्पश्येत्सुखी पश्येत्सुखा-धिकान् । आत्मानं हर्षशोकाभ्यां शत्रुभ्यामिव नार्पयेत् ॥ ४७ ॥ व्यसनं प्राप्य यो मोहात्केवलं परिदेवयेत् । क्रन्दनं वर्धयत्येव तस्यान्तं नाधिगच्छति ॥४८॥ केवलं व्यसनस्योक्तं भेषजं नयपण्डितैः । तस्योच्छेदसमारम्भो विषादपरिवर्जनम् ॥ ४९ ॥ शोककाले शुचो मा त्वं हर्षकाले च मा हृषः । अतीतानागतं हित्वा प्रत्युत्पन्नेन वर्तय ॥ ५० ॥ पुनर्वित्तं पुनर्मित्रं पुनर्भार्या पुनर्मही । एतत्सर्वं पुनर्लभ्यं न शरीरं पुनः पुनः ॥ ५१ ॥ अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम्।सुखान्यपि तथायान्ति दैन्यमत्रातिरिच्यते ॥ ५२ ॥ गते शोको न कर्तव्यो भविष्यं नैव चिन्तयेत् । वर्तमानेन कालेन वर्तयन्ति विचक्षणाः ॥ ५३ ॥ सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् । सुखदुःखे मनुष्याणां चक्रवत्परिव-र्ततः ॥ ५४ ॥ नष्टं मृतमतिक्रान्तं नानुशोचन्ति पण्डिताः । पण्डितानां च मूर्खाणां विशेषोऽयं यतः स्मृतः ॥ ५५ ॥ यदापि शोचतः शोको व्यसनं नापकर्षति। सामर्थ्यं शोचतो नास्तीसतोऽहं नाद्य शोचामि ॥ ५६ ॥ शोको नाशयते धैर्यं शोको नाशयते श्रुतम् । शोको नाशयते सर्वं नास्ति शोक-समो रिपुः ॥ ५७ ॥ ये शोकमनुवर्तन्ते न तेषां विद्यते

सुखम् । तेनाश्च लभते तेषां न स शोचितुमर्हसि ॥ बालेन विषयवस्य जीविते चापि संशयः ॥ ५८ ॥ यद्वा मानवं सुखं स्यात्सच्छरीरपोषणैः । तद्विज्ञानसामर्थ्यं न बालेऽस मतापितात् ॥ ५९ ॥ भये वा यदि वा दैवे समाप्य वो विमर्शयेत् । कृतं न कुरुते येनात्म स सम्बापपाप्नुयात् ॥ ६० ॥ यत्कुमाराः कुमारस्य वैरं कुर्युरचेतसः । न तस्माद्दोऽन्यद् धीव न विदुस्ते बलाबलम् ॥ ६१ ॥ बन्धुर्दाराश्च सदा गारे योगे वियमत्यहो । समयादुःखदायिस्य को भेदः पशुविमयोः ॥ ६२ ॥ सांसारिकसुखासक्तं ब्रह्मज्ञामीति वादिनम् कर्मब्रह्मोभयभ्रष्टं तं त्यजेदन्त्यजं यथा ॥ ६३ ॥ यदि नामास्य कायस्य यदन्तस्तद्बहिर्भवेत् । दण्डमादाय लोकोऽयं शुनः काकांश्च वारयेत् ॥ ६४ ॥ स्नानाद्यैर्नातुष्यत्स्माभिष्यन्दाभिषणादपि । कायमाधेयवशोक्तात्मणिक्ता यथापि विदुः ॥ ६५ ॥ अमेध्यपूर्णे कृमिजालसंकुले स्वभावदुर्गन्धमशौचमध्रुवम् । कलेवरं मूत्रपुरीषभाजनं रमन्ति मूढा न रमन्ति पण्डिताः ॥ ६६ ॥ वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि । तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥ ६७ ॥ श्रद्धया सात्त्विक धर्मो मद्भिर्न्याविराधिभिः । अकिञ्चना हि मुनयः श्रद्धावन्तो दिवं गताः ॥ ६८ ॥ श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः । ज्ञानं लब्ध्वा परां शान्तिमाचिरेणाधिगच्छति

॥ ६९ ॥ अश्रद्धा परमं पापं श्रद्धा पापप्रमोचिनी । जहाति पापं श्रद्धावान् सर्पो जीर्णामिव त्वचम् ॥ ७० ॥ निर्विवेकतया बाल्यं कामोन्मादेन यौवनम् । वृद्धत्वं विकलत्वेन सदा सोपद्रवं नृणाम् ॥ ७१ ॥ प्रातर्मूत्रपुरीषाभ्यां मध्याह्ने क्षुत्पिपासया । तृप्ताः कामेन बाध्यन्ते प्राणिनो निशि निद्रया ॥ ७२ ॥ यथा काष्ठञ्च काष्ठञ्च समेयातां महोदधौ । समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ ७३ ॥ त्वङ्मांसरुधिरस्नायुमेदोमज्जाऽस्थिसंहतौ । विण्मूत्रपूये रमतां कृमीणां कियदन्तरम् ॥ ७४ ॥ अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम् । लब्धोऽपि गर्भपातेन प्रसवेन च बाधते ॥ ७५ ॥ जातस्य हि ग्रहरोगादिः कुमारस्य च मूर्खता । उपनीतेऽप्यविद्यत्वमनुद्वाहश्च पण्डिते ॥ ७६ ॥ यूनश्च परदारादिर्दारिद्र्यञ्च कुटुम्बिनः । पित्रोर्दुःखस्य नास्त्यन्तो धनी चेन्म्रियते तदा ॥७७॥ नौषधानि न मन्त्राश्च न होमा न पुनर्जपाः । त्रायन्ते मृत्युनोपेतं जरया वापि मानवम् ॥ ७८ ॥ कायः सन्निहितापायः सम्पदः पदमापदाम् । समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥ ७९ ॥ प्रतिक्षणमयं कायः क्षीयमाणो न लक्ष्यते । आमकुम्भ इवाम्भःस्थो विशीर्णः सन्विभाव्यते ॥ ८० ॥ यथा हि पथिकः कश्चिच्छायामाश्रित्य तिष्ठति । विश्रम्य च पुनर्गच्छेत्तद्वद्भूतसमागमः ॥८१॥ पुत्रमित्रकलत्रेषु सक्ताः सीदन्ति जन्तवः । सरः पङ्कार्णवे मग्ना जीर्णा

वनगमा इव ॥ ८२ ॥ यमाद्विभेषि किं मूढ भीत मुञ्चति किं
यमः । अजात नैव गृह्णाति कुरु यत्नमजन्मनि॥८३॥तुल्ये वि-
यामिमे यस्य सुखदुःखे तथैव च । अतीतानागते योगे स
वै सर्वधनी नरः ॥ ८४ ॥ यदा चाय न बिभेति यदा चा
स्माच्च बिभ्यति । यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा
॥ ८५ ॥ यदा न कुरुते भावं सर्वभूतेषु पापकम् । कर्मणा
मनसा वाचा ब्रह्म सम्पद्यते तदा ॥ ८६ ॥ विनीतमानमो
हस्य दुष्टसङ्गविवर्जितः । विज्ञाततत्त्वस्वरूप नित्यमुपपद्यते
॥ ८७ ॥ अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः । ऐश्वर्य
प्रियसंवासो मुह्येत्तत्र न पण्डितः ॥ ८८ ॥ लोहदारुमयैः
पाशैः पुमान्बद्धो विमुच्यते । पुत्रदारमयैः पाशैर्बद्धो नैव
विमुच्यते ॥८९॥ आदरेण यथा स्तौति धनवन्तं धनेच्छया ।
तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥ ९० ॥ मित
मायुरपो नित्यं नेति याति कदाचन । परायुरिव तदपि न
मम योगकोलुपा ॥ ९१ ॥ इहैव नरकव्याधेश्चिकित्सां न
करोति यः । गत्वा निरौषध स्थान सरुजः किं करिष्यति
॥९२॥ आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः ।
मातरो विविधा दृष्टाः पितरः सुहृदस्तथा ॥ ९३ ॥ बान्धवा
परिजनस्यार्थे कृतं कर्म शुभाशुभम् । एकाकी तेन दह्यऽ
गतास्ते फलभोगिनः ॥ ९४ ॥ अहो दुःखोदधौ मग्नो न
पश्यामि प्रतिक्रियाम् । यदि योग्याः मनुष्येह हस्तपदे

महेश्वरम् ॥ ९५ ॥ अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् । यदि योन्याः प्रमुच्येऽहं तत्साङ्ख्यं योगमभ्यसे ॥ ९६ ॥ अशुभक्षयकर्तारं फलमुक्तिप्रदायकम । यदि योन्याः प्रमुच्यापि ध्याये ब्रह्म सनातनम् ॥ ९७ ॥ जलान्तश्चन्द्रचपलं जीवितं खलु देहिनाम् । तथाविधमिति ज्ञात्वा शश्वत्कल्याणमाचरेत् ॥ ९८ ॥ यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ ९९ ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ १०० ॥ यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १०१ ॥ यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः। अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥ १०२ ॥ अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः । तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥ १०३ ॥ श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः । श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते ॥ १०४ ॥ न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् । अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥ १०५ ॥ पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् । अथ धीरा

अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ १०६ ॥
दाराः परिभवकारा बन्धुजनो बन्धनं विषं विषयाः । को
ऽयं जनस्य मोहो ये रिपवस्तेषु सुहृदाशा ॥ १०७ ॥
सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । वृणुते
हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥१०८॥
पाषाणखण्डेष्वपि रत्नबुद्धिः कान्तेति धीः शोणितमांस
पिण्डे । पञ्चात्मके वर्ष्मणि चात्मभावो जयत्यसौ काञ्चन
मोहलीला ॥ १०९ ॥ आस्वादितपरमानन्दो वदति विषमेव
रमणीयम् । तिक्तैकमेव दृष्टं येन न दृष्टं घृतं क्वापि ॥११०॥
निश्चितं जगदिदं नश्वरं पुनरस्मिन्खिलतरं कलेवरम् । अथ
तस्य कृते कियानयं क्रियते हन्त जनैः परिश्रमः ॥ १११ ॥
नन्दन्ति मन्दाः श्रियमाप्य नित्यं परं विषीदन्ति विपद्
गृहीताः । विवेकदृष्ट्या चरतां नराणां श्रियो न किंचि
द्विपदो न किंचित् ॥ ११२ ॥ स्फुरति तावदमी विषयाः
सुखं स्फुरति यावदियं हृदि मूढता । मनसि तत्त्वविदां तु
विवेचके क्व विषयाः क्व सुखं क्व परिग्रहः ॥ ११३ ॥ इह
चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः । भूतेषु
भूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥
११४ ॥ यदुपतेः क्व गता मथुरापुरी रघुपतेः क्व गतो
त्तरकोशला । इति विचिन्त्य मनः स्थिरतां कुरु न सदिदं
जगदित्यवधारय ॥ ११५ ॥ प्रादुर्भवन्ति वपुषः कति या न

कीटा यान्यत्नतः खलु तनोरपमारयन्ति । मोहः क एष जगतो यदपत्यसंज्ञां तेषां विधाय परिशोषयति स्वदेहम् ॥ ११६ ॥ साधारणे वपुषि काकशृगालवह्निमात्रादिकस्य ममतां त्यज दुःखहेतुम् । तद्वज्जहिहि बहिरर्थगतांश्च विद्वन् चित्त बधान परमात्मनि निर्विशङ्कम् ॥ ११७ ॥ गुणवद्-गुणवद्वा कुर्वता कार्यमादौ परिणतिरवधार्या यत्नतः पण्डितेन । अतिरभसकृतानां कर्मणामाविपत्तेर्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ११८ ॥ यत्शान्तिः समये श्रुतिः शिवशिवेत्युक्तौ मनोनिर्वृतिर्मैक्षे चाभिरुचिर्गृहेषु विरतिः शश्वत्समाधौ रतिः। एकान्ते वसतिर्गुरून्मति नतिः सद्भिः समं सङ्गतिः सत्त्वे प्रीतिरनङ्गनिर्जितिरमी सन्मुक्तिमार्गे स्थितिः॥ ११९ ॥ प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम्। तृष्णा-स्रोतो विभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः ॥ १२० ॥

## वैराग्यम् ४२

प्रचण्डवासनावातैरुद्धूता नौर्मनोमयी । वैराग्यकर्णधारेण विना रोद्धुं न शक्यते ॥ १ ॥ नात्यक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परम् । नात्यक्त्वा चाभयः शेते त्यक्त्वा सर्वं सुखी भवेत् ॥ २ ॥ रागिण्यपि विरागिण्यः स्त्रियस्तासु रमेत कः । अहञ्च कलये मुक्तिं या विरागिणि रागिणी ॥

३ ॥ पुरयित्वाऽर्थिनामाशां प्रिय कृत्वा द्विषामपि । पार
गत्वा श्रुतौघस्य धन्या वनमुपासते ॥ ४ ॥ यावतः कुरुते
जन्तुः सम्बन्धान्मनसः प्रियान् । तावन्तोऽस्य निखन्यन्ते
हृदये शोकशङ्कवः ॥५॥ निःस्नेहो याति निर्वाणं स्नेहोऽन
र्थस्य कारणम् । निःस्नेहेन प्रदीपेन यदेतत्प्रकटीकृतम् ॥६॥
येषु येषु दृढं बद्धा भावना स्वस्तुषु । तानि तानि विनष्टानि
दृष्टानि किमितोऽपरम् ॥ ७ ॥ नीलोत्पलदलश्यामं परमेव
मूपनम । हासायैव विलासिन्यः सम्प्रमाणिताः स्थिताः ॥
८ ॥ गतेनापि न सम्बन्धो न ह्युत्पन्नेन भविष्यता । वर्तमाने
क्षणातीत सङ्गतिः कस्य केन वा ॥९॥ पृथिवी दह्यते यत्र
मेरुश्चापि विशीर्यते । शुष्यते सागरजलं शरीरे तत्र का कथा
॥ १० ॥ अनन्तपारे संसारे यावन्तो बान्धवास्त्वया ।
न सन्ति खलु तावन्तो गङ्गायामपि वालुकाः ॥ ११ ॥ मा
तृपितृसहस्राणि पुत्रदारशतानि च । तवानन्तानि यातानि
कस्य ते कस्य वा भवान् ॥१२॥ सर्वे क्षयान्ता निचयाः
पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं
हि जीवितम् ॥ १३ ॥ अन्येन व्यर्थतां नीत भवभोगसुखे
भिना । कालमूल्येन विक्रीतो हन्त चिन्तामणिर्मया ॥१४॥
कोट्यो ब्रह्मणां याता गताः सर्गपरम्पराः । प्रयाताः पांसु
वद्भूपाः का धृतिर्मम जीवने ॥१५॥ राज्यां राज्यां व्य-
तीतायामायुरल्पतरं यदा । स्वल्पोदके मत्स्य इव धृतिं कि

न्देत कः पुमान् ॥१६॥ यस्यां राज्यां राज्यां व्यतीतायां न किञ्चिच्छुभमाचरेत् । तदेव वन्ध्यं दिवसं भाति विद्याद्विचक्षणः ॥१७॥ जीवितं मरणान्तं हि जरान्ते रूपयौवने । संपदो विपदान्ता वा अत्र को रतिमाप्नुयात् ॥ १८ ॥ न बन्धुरस्ति ते कश्चिन्न त्वं बन्धुश्च कस्यचित् । पथि सङ्गतमेवैतद्दारबन्धुसुहृज्जनैः ॥ १९ ॥ अनित्ये सति मानुष्ये विद्युत्स्फुरणचञ्चले । ये रमन्ति नमस्तेभ्यः साहसं किमतः परम् ॥ २० ॥ तदनित्यमिति ज्ञात्वा सर्वभावेष्वनित्यताम् । सर्वारम्भान् परित्यज्य भज चात्मनि योगवित् ॥ २१ ॥ सद्वीपाब्धिरत्नेयं महसत्त्वरत्नाकरा । तानिदानीं न पश्यामि यैर्भुक्तेयं पुरा मही ॥ २२ ॥ सञ्चितं सञ्चितं द्रव्यं नष्टं तव पुनः पुनः । कदाचिन्मोक्ष्यसे मूढ धनेहां धनकामुक ॥ २३ ॥ अद्य श्वो वा परश्वो वा मरणं निश्चितं मम । इति मत्वा गृहं त्यक्त्वा हरिसंस्मरणं कुरु ॥२४॥ गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् ॥२५॥ उद्घाटितनवद्वारे पञ्जरे विहगोऽनिलः । यत्तिष्ठति तदाश्चर्यं प्रयाणे विस्मयः कुतः ॥२६॥ स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान् । वैराग्यकारणं तस्य किमन्यदुपदिश्यते ॥ २७ ॥ मांसासृक्पूयविण्मूत्रस्नायुमज्जाऽस्थिसंहतौ । देहे चेत्प्रीतिमान्मूढो भविता नरकेऽपि सः ॥ २८ ॥ अथ ये महतां मूर्ध्नि ते दिनैर्निपतन्त्यधः । हन्त चित्त महत्ता-

पाः केय विपक्षता तव ॥९॥ मया पश्यसि किमिदं किम ते पवित्र बुद्धि । अरे मूढ न जानासि गतं मे यौवन वनम् ॥१०॥ यथैवाभ्यागुपात्तधान् यथैवाभ्येपनास्त्यमेव । प्रापयासर्वे कामानां परित्यागो विशिष्यते ॥११॥ न सर्वेषानि प्राप्यन्त सनिपम्तुपसेवया । विषयेषु महानि यथा ज्ञानेन निसम ॥१२॥ भक्षीमहि वयं भिक्षामाशावासो वसीमहि । शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥१३॥ प्रारम्भो हि दुःखाय न सुखाय कदाचन । ततः परकृतं वेश्म प्रविश्य सुखमेधत ॥१४॥ अनित्ये प्रियसंवासे संसारे चक्रवद्गतौ । पथि सङ्ग तमेवैतद्भ्राता माता पिता सखा ॥ १५ ॥ नास्यत्यन्तसंवासो कस्यचित् जातु केनचित् । अपि स्वेन शरीरेण किमुतान्येन केनचित् ॥ १६ ॥ क नु तेऽद्य पिता राजन् क नु तेऽद्य पितामहाः । न त्वं पश्यसि तानद्य न त्वां पश्यन्ति तेऽनघ ॥ १७ ॥ मरणस्य हि भूतानां व्याधिचारौ इहावेव । पश्यैनां दुर्बलानाञ्च बलवतां महतामपि ॥ १८ ॥ न कश्चि न्मासमात्मनोऽसौ नरायस्तु हि मानवः । अपि सागरपर्यन्तां विजित्येमां वसुन्धराम् १९ ममायेरजितास्तैस्तैः पार्थिवेन्द्राः सहस्रशः । ये मया पृथिवीं त्यक्त्वा इति ज्ञात्वा विमुच्यते ॥२० गतानुपर्यस्तिषा देवासुराश्च तथा नराः । लोकादस्मात्परं लोकं यः पश्यति स पश्यति ॥२१॥ यथात्मा ये शरीरेषु यद्वात्मा ये क्वचित्स्थितौ । ताभ्योऽसमाबैनाम्यताम्पिपिपासु

पुनः पुनः ॥ ४२ ॥ धनानि बान्धवा भृत्या मित्राणि विभवाश्च ये । विनाशभयभीतस्य सर्वं नीरसतां गतम्॥४३॥ यतो यतो निवर्तते ततस्ततो विमुच्यते । निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि ॥४४॥ न मातृपुत्रबान्धवा न संस्तुतः प्रियो जनः । अनुव्रजन्ति सङ्कटे व्रजन्तमेकपातिनम् ॥४५॥ यावद्वित्तोपार्जनसक्तस्तावन्निजपरिवारो रक्तः । तदनु च जरया जर्जरदेहे वार्तां कोऽपि न पृच्छति गेहे ॥ ४६ ॥ मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः । क्षणमप्यवतिष्ठते श्वसन्यदि जन्तुर्ननु लाभवानसौ ॥ ४७ ॥ किन्ते धनैर्बन्धुभिरेव वा किं दारैश्च किं ब्राह्मण यो मरिष्यसि । आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते क्व गताः पिता च ॥ ४८ ॥ मृतं पुत्रं दुःखपुष्टं मनुष्या उत्क्षिप्य राजन् स्वगृहान्निर्हरन्ति । तं मुक्तकेशाः करुणं रुदन्ति चितामध्ये काष्ठमिव क्षिपन्ति ॥ ४९ ॥ हरिष्यमाणो बहुधा परस्वं करिष्यमाणः सुतसम्पदादि । धरिष्यमाणोऽरिशिरःसु पादं न स्वं मरिष्यन्तमवैति कोऽपि ॥ ५० ॥ कुटुम्बचिन्ताकुलितस्य पुंसः कुलञ्च शीलञ्च गुणाश्च सर्वे । अपक्वकुम्भे निहिता इवापः प्रयान्ति देहेन समं विनाशम् ॥ ५१ ॥ प्रबलानिलवेगवेल्लितध्वजचीनांशुककोटिचञ्चले । अपिमूढमतिः कलेवरे कुरुते कः स्थिरबुद्धिमम्बिके ॥ ५२ ॥ कति नाम सुता न लालिताः कति वा नेह वधूरभुञ्जि हि । क्व नु

लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ ६२ ॥ पातालमा-
विशसि यासि नभो विलंघ्य दिङ्मण्डलं भ्रमसि मानस
चापलेन । भ्रान्त्वाऽपि देशमपरं हि तदात्मनीनं न ब्रह्म
संस्मरसि निर्वृतिमेषि येन ॥ ६३ ॥ यां चिन्तयामि सततं
मयि सा विरक्ता साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः ।
अस्मत्कृते च परितुष्यति काचिदन्या धिक्तां च तं च मदनं
इमां च मां च ॥ ६४ ॥ केचिद्वदन्ति धनहीनजनो जघन्यः
केचिद्वदन्ति गुणहीनजनो जघन्यः । व्यासो वदत्यखिलवेद-
विशेषविज्ञो नारायणस्मरणहीनजनो जघन्यः ॥ ६५ ॥ रोगा
हरन्ति सततं प्रबलाः शरीरं कामादयोऽप्यनुदिनं प्रदहन्ति
चित्तम् । मृत्युश्च नृत्यति सदा कलयन्दिनानि तस्मात्त्वमद्य
शरणं मम दीनबन्धो ॥ ६६ ॥ देहो विनश्यति सदा परि-
णामशीलश्चित्तं च खिद्यति सदा विषयानुरागि । बुद्धिः सदा
हि रमते विषयेषु नान्तस्तस्मात्त्वमद्य० ॥ ६७ ॥ आयुर्विन-
श्यति यथाऽऽमघटस्थतोयं विद्युत्प्रभेव चपला बत यौवनश्रीः
। वृद्धा प्रधावति यथा मृगराजपत्नी तस्मात्० ॥ ६८ ॥
सत्सङ्गतीह विदिता तव भक्तिहेतुः साऽप्यद्य नास्ति बत
पण्डितमानिनो मे । तामन्तरेण न हि सा क्व च बोधवार्ता
तस्मात्० ॥ ६९ ॥ दृष्टिर्न भूतविषया समताऽभिधाना
वैषम्यमेव तदियं विषयीकरोति । शान्तिः कुतो मम भवेत्स-
मता न चेत्स्यात्तस्मात्० ॥७०॥ मैत्री समेषु न च ममास्ति

किन्त्वस्माभिर्विगलितविवेकैर्व्यवसितम्। यदाढ्यानामग्रे द्रविणमदनिःशङ्कमनसां कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ ७९ ॥ तपस्यन्तः सन्तः किमधिनिवसामः सुरनदीं गुणोदारान्दारानुत परिचरामः सविनयम् । पिबामः शास्त्रौघानुत विविधकाव्यामृतरसान् न विद्मः किं कुर्मः कतिपयनिमेषायुषि जने ॥ ८० ॥ अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा मणौ वा लोष्ठे वा कुसुमशयने वा दृषदि वा । तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥ ८१ ॥ श्रियो दोलालोला विषयजरसाः प्रान्तविरसा विपद्गेहं देहं महदपि धनं भूरिनिधनम् । बृहच्छोको लोकः सततमबला दुःखबहुलास्तथाऽप्यस्मिन्घोरे पथि बत रता हन्त कुधियः ॥ ८२ ॥ वयं येभ्यो जाताश्चिरतरगता एव खलु ते समं यैः संवृद्धाः स्मरणपदवीं तेऽपि गमिताः । इदानीमेते स्मः प्रतिदिवसमासन्नपतना गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ ८३ ॥ अमीषां जन्तूनां कतिपयनिमेषस्थितिजुषां वियोगे धीराणां क इह परितापस्य विषयः । क्षणादुत्पद्यंते विलयमपि यान्ति क्षणममी न केऽपि स्थातारः सुरगिरिपयोधिप्रभृतयः ॥८४॥ पुरा विद्वत्ताऽऽसीदुपशमवतां क्लेशहतये गता कालेनासौ विषयसुखसिद्ध्यै विषयिणाम्। इदानीन्तु प्रेक्ष्य क्षितितलभुजः शास्त्रविमुखानहो कष्टं साऽपि प्रतिदिनमधोऽधः प्रविशति

पादारविन्दम् ॥ ९२ ॥ गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्तावलिर्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते । वाक्यं नाद्रियते च बान्धवजनैर्भार्या न शुश्रूषते हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते ॥ ९३ ॥ वीभत्सा विषया जुगुप्सिततमः कायो वयो गत्वरं प्रायो बन्धुभिरध्वनीव पथिकैर्योगो वियोगावहः । हातव्योऽयमसार एष विरसः संसार इत्यादिकं सर्वस्यैव हि वाचि चेतसि पुनः कस्यापि पुण्यात्मनः ॥ ९४ ॥ त्वं राजा वयमप्युपासितगुरुप्रज्ञाऽभिमानोन्नताः ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः । इत्थं मानद नातिदूरमुभयोरप्यावयोरन्तरं यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निःस्पृहाः ॥ ९५ ॥ चाण्डालः किमयं द्विजातिरथवा शूद्रोऽथ किं तापसः किं वा तत्त्वनिवेशपेशलमतिर्योगीश्वरः कोऽपि किम् । इत्थुत्पन्नविकल्पजल्पमुखरैः सम्भाष्यमाणा जनैर्न क्रुद्धाः पथि नैव तुष्टमनसो यान्ति स्वयं योगिनः ॥९६॥ नास्माकं शिविका न चास्ति कटकाद्यालंक्रियासत्क्रिया नोतुङ्गस्तुरगो न कश्चिदनुगो नाप्यम्बरं सुन्दरम् । किन्तु क्ष्मातलवर्त्यशेषविदुषां ब्रह्मात्मविद्याजुषां चेतस्तोषकरी शिरोनतिकरी विद्याऽनवद्याऽस्ति नः ॥ ९७ ॥ आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः । शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते जीवे वारि-

तरङ्गबुद्बुदसमे सौख्यं कुतः प्राणिनाम् ॥९८॥ रम्यं हर्म्यतलं न किं वसतये श्राव्यं न गेयादिकं किं वा प्राणसमासमागमसुखं नैवाधिकं प्रीतये । किन्तूद्भ्रान्तपतत्पतङ्गपवनव्यालोलदीपाङ्कुरच्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः ॥ ९९ ॥ भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चला आयुर्वायुविघट्टिताभ्रपटलीलीनाम्बुवद्भङ्गुरम् । लोला यौवनलालसा तनुभृतामित्याकलय्य द्रुतं योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विदध्वं बुधाः ॥१००॥ आयूंषि क्षीणानि यौवनमपि यातो जराऽभ्यासित स्वयोगा विरहाय सामीरसा भोगाः समभ्योषिनः । आनन्दोऽपि यथाग्य स्थितिमिति लोका समस्तं जगदिदं बहुकार्यमानिवधिया कुम्भन्ति मारयन्ति च ॥ १०१ ॥ रात्रिः सैव पुनः स एव दिवसो मत्वाऽबुधा जन्तवो धावन्त्युद्यमिनस्तथैव निभृतप्रारब्धतत्तत्क्रियाः । व्यापारैः पुनरुक्तभुक्तविषयैरेवंविधेनामुना संसारेण कदर्थिताः कथमहो मोहान्न लज्जामहे ॥ १०२ ॥ ब्रह्मज्ञानविवेकनिर्मलधियः कुर्वन्त्यहो दुष्करं यन्मुञ्चन्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निःस्पृहाः । न प्राप्तानि पुरा न सम्प्रति न च प्राप्तौ दृढप्रत्ययो वाञ्छामात्रपरिग्रहाण्यपि परित्यक्तुं न शक्ता वयम् ॥ १०३ ॥ आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी । मोहावर्तसुदुस्तरातिगहना प्रोत्तुङ्गचिन्ता-

तटी तस्याः पारंगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥ १०४ ॥ आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते । दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥ १०५ ॥ भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं माने दैन्यभयं बले रिपुभयं रूपे जराया भयम् । शास्त्रे वादभयं गुणे खलभयं काये कृतान्ताद्भयं सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम् ॥ १०६ ॥ याच्ञाशून्यमयत्नलभ्यमशनं धात्रा मरुत्कल्पितं व्यालानां पशवस्तृणाङ्कुरभुजः सृष्टाः स्थलीशायिनः । संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥ १०७ ॥ धैर्यं यस्य पिता क्षमा च जननी शान्तिश्चिरं गेहिनी सत्यं सूनुरयं दया च भगिनी भ्राता मनः संयमः । शय्या भूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजनमेते यस्य कुटुम्बिनो वद सखे कस्माद्भयं योगिनः ॥ १०८ ॥ यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः । आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान् सन्दीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥ १०९ ॥ अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदित्थं शूरस्त्वं वादिदर्पज्वरशमनविधावक्षयं पाटवं नः । सेवन्ते त्वां

नाश्नाति सेवयौत्सुक्यादनिद्रो न प्रबुध्यते। न निःशङ्कं वचो ब्रूते सेवकोऽप्यत्र जीवति ॥१२॥ या प्रकृत्यैव चपला निपतत्यशुचावपि। स्वामिनो बहु मन्यन्ते दृष्टिं तामपि सेवकाः ॥ १३ ॥ मनुष्यजातौ तुल्यायां भृत्यत्वमतिगर्हितम्। प्रथमो यो न तत्रापि स किं जीवत्सु गण्यते ॥ १४ ॥ शीतातपादिकष्टानि सहते यानि सेवकः। धनाय तानि चाल्पानि यदि धर्माय मुच्यते ॥१५॥ एतद्धि जन्मसाफल्यं यदनायत्तवृत्तिता। ये पराधीनतां यातास्ते वै जीवन्ति के मृताः ॥१६॥ स्वयं जहाति सेवकः सुखं च मानमेव च। यदर्थमर्थमीहते तदेव तस्य हीयते ॥ १७ ॥ प्रणमत्युन्नतिहेतोर्जीवनहेतोर्विमुञ्चति प्राणान्। दुःखीयति सुखहेतोः को मूर्खः सेवकादन्यः ॥ १८ ॥ विज्ञैः स्निग्धैरुपकृतमपि द्वेष्यतामेति कश्चित् साक्षादन्यैरपकृतमपि प्रीतिमेवोपयाति। चित्रं चित्रं किमथ चरितं नैकभावाश्रयाणां सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ १९ ॥ आहारे बडवानलश्च शयने यः कुम्भकर्णायते संदेशे बधिरः पलायनविधौ सिंहः शृगालो रणे। अन्धो वस्तुनिरीक्षणेऽथ गमने खञ्जः पटुः क्रन्दने भाग्येनैव हि लभ्यते पुनरसौ सर्वोत्तमः सेवकः ॥२०॥

## राजधर्माः ४९

राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम्। राजन्यसति लोकेऽस्मिन्कुतो भार्या कुतो धनम् ॥ १ ॥ धार्मिकं

पालयेद्वापि धर्मेण प्रजास्तुल्यं फलं लभेत् ॥१५॥ किन्तस्य तपसा राज्ञः किन्तस्य ध्वरैरपि । सुपालितप्रजो यः स्यात्स सर्वधर्मविदेव सः ॥ १६ ॥ सदाऽनुरक्तप्रकृतिः प्रजापालनतत्परः । विनीतात्मा हि नृपतिर्भूयसीं श्रियमश्नुते ॥ १७ ॥ यदि न स्यान्नरपतिःसम्यङ्नेता ततः प्रजाः । अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥१८॥ न तिष्ठन्ति स्वस्वधर्मे विना पालेन वै प्रजाः । प्रजया तु विना स्वामी पृथिव्यां नैव शोभते ॥१९॥ सुवर्णैः पट्टचैलैश्च शोभा स्य द्वारयोषिताम् । पराक्रमेण दानेन राजन्ते राजनन्दनाः ॥ २० ॥ तस्करेभ्यो नियुक्तेभ्यः शत्रुभ्यो नृपवल्लभात् । नृपतिर्निजलोभाच्च प्रजा रक्षेत्पितेव हि ॥२१॥ राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम् । राजा पिता च माता च सर्वेषां न्यायवर्तिनाम् ॥२२॥ करुणानाथवृद्धानां यदश्रुपरिमार्जनम् । हर्षं संजनयन् नृणां स राज्ञो धर्म उच्यते॥२३॥ इदमेव नरेन्द्राणां स्वर्गद्वारमनर्गलम् । यदात्मनः प्रतिज्ञा च प्रजा च परिपाल्यते ॥ २३ ॥ यथा मधु समादत्ते रक्षन्पुष्पाणि षट्पदः । तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया ॥ २४ ॥ पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् । मालाकार इवारामे न यथाऽङ्गारकारकः ॥२५॥ यथा बीजांकुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः । फलप्रदो भवेत्काले तद्वल्लोकाः सुरक्षिताः ॥ २६ ॥ लोकानुग्रहकर्तारः प्रवर्द्धन्ते नरेश्वराः । लोकानां

अपि धन्वन्तरिर्वैद्यः किं करोति गतायुषि ॥४० ॥ गजा-श्वरथयानन्तु प्रातः सायं सदाऽभ्यसेत् । व्यूहाभ्यासं सैनिकानां स्वयं शिक्षेच्च शिक्षयेत् ॥४१ ॥ अपि यत्सुकरं कर्म तदप्येकेन दुष्करम् । विशेषतोऽसहायेन किन्नु राज्य महोदयम् ॥ ४२ ॥ मौलान् शास्त्रविदः शूरान् लब्धलक्षान्कुलोद्भवान् । सचिवान्सप्त चाष्टौ वा प्रकुर्वीत परीक्षितान् ॥ ४३ ॥ व्यवहारविदः प्राज्ञा वृत्तशीलगुणान्विताः । रिपौ मित्रे समा ये च धर्मज्ञाः सत्यवादिनः ॥ ४४ ॥ निरालसा जितक्रोधकामलोभाः प्रियंवदाः । राज्ञा नियोजितव्यास्ते सभ्याः सर्वासु जातिषु ॥ ४५ ॥ अमात्यमुख्यं धर्मज्ञं प्राज्ञं दान्तं कुलोद्भवम् । स्थापयेदासने तस्मिन् खिन्नः कार्येक्षणे नृणाम् ॥ ४६ ॥ कर्मशीलगुणाः पूज्यास्तथा जातिकुले नहि । न जात्या न कुलेनैव श्रेष्ठत्वं प्रतिपद्यते ॥ ४७ ॥ अधिकारे क्षमं दृष्ट्वा ह्यधिकारे नियोजयेत् । नाधिकारं चिरं दद्याद्यस्मै कस्मै सदा नृपः ॥ ४८ ॥ अधिकारमदं पीत्वा को न मुह्येत्पुनश्चिरम् । अतः कार्यक्षमं दृष्ट्वा कार्येऽन्य-मपि नियोजयेत् ॥ ४९ ॥ एकं भूमिपतिः करोति सचिवं राज्यं प्रमाणं यदा तं मोहाच्छ्रयते मदः स च मदादास्येन निर्विद्यते । निर्विण्णस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणेष्वभिद्रुह्यति ५० सन्मन्त्रिणा वर्धयते नृपाणां लक्ष्मीमहिधर्मयशः समूहः ।

न्द्रियाणामनीश्वरः। इन्द्रियाणामनैश्वर्यादैश्वर्याद् भ्रश्यते नरः ॥६२॥ यस्तु शत्रोर्वशस्थस्य शक्तोऽपि कुरुते दयाम् । हस्तप्राप्तस्य वीरस्य तं चैव पुरुषं विदुः ॥६३॥ धान्यानां संग्रहो राजन्नुत्तमः सर्वसंग्रहात् । निक्षिप्तं हि मुखे रत्नं न कुर्यात्प्राणधारणम् ॥ ६४ ॥ विद्याकलानां वृद्धिः स्यात्तथा कुर्यान्नृपः सदा । विद्याकलोत्तमान्दृष्ट्वा वत्सरे पूजयेच्च तान् ॥६५॥ राज्ञो हि रक्षाऽधिकृताः परस्वादायिनः शठाः। भृत्या भवन्ति प्रायेण तेभ्यो रक्षेदिमाः प्रजाः ॥६६॥ ये कार्यिकेभ्योऽर्थमेव गृह्णीयुः पापचेतसः । तेषां सर्वस्वमादाय राजा कुर्यात्प्रवासनम् ॥६७॥ ग्रामान्पुराणि देशांश्च स्वयं संवीक्ष्य वत्सरे । अधिकारिगणैः काश्च रञ्जिताः काश्च कर्षिताः ॥६८॥ प्रजास्ताः साधुभूतेन व्यवहारं विचिन्तयेत् । न भृत्यपक्षपाती स्यात्प्रजापक्षं समाश्रयेत् ॥ ६९ ॥ प्रजाशतेन सन्द्विष्टं सन्त्यजेदाधिकारिणम् । अमात्यमपि संवीक्ष्य सकृदन्यायगामिनम् ॥ ७० ॥ मूर्खं व्यसनिनं लुब्धमप्रगल्भं भयाकुलम् । क्रूरमन्यायकर्तारं नाधिपत्ये नियोजयेत् ॥ ७१ ॥ स ह्यमात्यः सदा श्रेयान् काकिणीं यः प्रवर्धयेत् । कोशः कोशवतः प्राणाः प्राणाः प्राणा न भूपतेः ॥ ७२ ॥ पृष्टो ब्रूते न सत्यं यः परिणामे सुखावहम् । मन्त्री चेत्प्रियवक्ता स्यात्केवलं स रिपुः स्मृतः ॥ ७३ ॥ अप्रियाण्यपि पथ्यानि ये वदन्ति नृणामिह । त एव सुहृदः प्रोक्ता अन्ये स्युर्नाम-

चारकाः ॥ ७५ ॥ अप्रियस्यापि पथ्यस्य परिणामे सुखा
वहः । वक्ता श्रोता च यत्रास्ति रमन्ते तत्र सम्पदः ॥७६॥
सुलभाः पुरुषा राजन्सततं प्रियवादिनः । अप्रियस्य तु प
थ्यस्य वक्ता श्रोता च दुर्लभः ॥ ७६ ॥ यो हि धर्मं समा
श्रित्य हित्वा भर्तुः प्रियाप्रिये । अप्रियाण्याह पथ्यानि तेन
राजा सहायवान् ॥ ७७ ॥ यः कृत्वा सुकृतं राज्ञो दुष्कर
हितमुत्तमम् । लज्जया वक्ति नो किञ्चित्तेन राजा सहाय
वान् ॥७८॥ युद्धकालेऽग्रगो यः स्याद्यदा पृष्ठानुगः पुरे ।
भर्तोर्द्वाराश्रितो हर्म्ये स भवेद्राजवल्लभः ॥ ७९ ॥ सेवतोऽह
र्मर्तोर्नित्यमिति मत्वा न्यतिक्रमेत् । कृच्छ्रेष्वपि न मर्यादां
न भवेद्राजवल्लभः ॥८०॥ ताडितोऽपि दुरुक्तोऽपि दण्डितो
ऽपि महीभुजा । न चिन्तयति यः पापं स भृत्योऽर्हो मही
भुजाम् ॥८१॥ योऽनाहूतः समभ्येति द्वारे तिष्ठति सर्वदा ।
पृष्टः सत्यं मितं ब्रूते स भृत्योऽर्हो महीभुजाम् ॥८२॥मना
गिङ्गितोऽप्यपि नृपस्य दृष्ट्वा हानिकरं च या । यतते तस्य नाशाय
स भृत्योऽर्हो महीभुजाम् ॥८३॥ न क्षुधा पीड्यते यस्तु नि
द्रया न कदाचन । न च शीतातपाद्यैश्च स भृत्योऽर्हो मही
भुजाम् ॥ ८४ ॥ श्रुत्वा साङ्ग्रामिकीं वार्तां भविष्यां स्वा
मिन प्रति । प्रसन्नास्यो भवेद्यस्तु स भृत्योऽर्हो महीभुजाम् ॥
८५ ॥ सीमावृद्धिं समायाति शुक्लपक्ष इवोडुराट् । नियोग
संस्थिते यस्मिन् स भृत्योऽर्हो महीभुजाम् ॥ ८६ ॥ दूरेः

मधार्यते नाभिर्नाभौ चाराः प्रतिष्ठिताः । स्वामिसेवकयोरेवं वृत्तिचक्रं प्रवर्तते ॥ ८७ ॥ तृणैरावेष्ट्यते रज्जुस्तया नागो हि बध्यते । एवं ज्ञात्वा नरेन्द्रेण भृत्याः कार्या विचक्षणाः ॥ ८८ ॥ शिरसा विधृता नित्यं तथा स्नेहेन पालिताः । केशा अपि विरज्यन्ते निःस्नेहाः किं न सेवकाः ॥ ८९ ॥ राजा तुष्टोऽपि भृत्यानां मानमात्रं प्रयच्छति । तेऽपि संमानमात्रेण प्राणैः प्रत्युपकुर्वते ॥९०॥ अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित् । वपुष्मान्वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते ॥९१॥ इङ्गिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः । समयज्ञः स्वामिभक्तः प्रतीहारी स इष्यते ॥९२॥ समस्तनीतिशास्त्रज्ञो वाहने पूजितश्रमः । शौर्यवीर्यगुणोपेतः सेनाध्यक्षो विधीयते ॥ ९३ ॥ सालसं मुखरं क्रूरं स्तब्धं व्यसनिनं शठम् । असंतुष्टमभक्तञ्च त्यजेद्भृत्यं नराधिपः॥९४॥आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः । भर्तृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥९५॥मृतानां स्वामिनः कार्ये भृत्यानामनुवर्तिनाम् । भवेत्स्वर्गेऽक्षयो वासः कीर्तिश्च धरणीतले ॥ ९६ ॥ मूर्खे नियुज्यमाने तु त्रयो दोषा महीपतेः।अयशश्चार्थनाशश्च नरके गमनं तथा ॥९७॥ प्राज्ञे नियुज्यमाने तु सन्ति राज्ञस्त्रयो गुणाः । यशः स्वर्गनिवासश्च विपुलश्च धनागमः॥९८॥ कृतकृत्यस्य भृत्यस्य कृतं नैव प्रणाशयेत् । फलेन मनसा वाचा दृष्ट्या चैनं प्रहर्षयेत् ॥ ९९ ॥ कालातिक्रमणं वृत्तेर्यो

न कुर्वीत नृपतिः। कदाचिदं न मुञ्चन्ति नरींसता अपि ते बुधाः॥१००॥ कारुण्यं सर्वेषामस्त यस्य भृत्येषु सर्वदा। सम्प्रवेश्य महीपालश्चैलोक्यस्यापि रक्षणे॥ १०१ ॥ नि-र्विशेषो यदा राजा समं भृत्येषु तिष्ठति। तत्रोद्यमसमर्थानां मुत्साहः परिहीयते॥१०२॥ कार्ये यस्मिन्नो कार्यो येषां बुद्धिः प्रवर्तते। न तेषां सन्निधौ भृत्यो नायकस्तोऽपि तिष्ठति॥१०३॥ प्रसादो निष्फलो यस्य कोपश्चापि निरर्थकः। न तं राजानमिच्छन्ति षण्ढं पतिमिवाङ्गनाः॥ १०४॥ दुर्योधनः समर्थोऽपि दुर्मन्त्री मन्त्रप गतः। राज्यमेकातपत्रका रोच्चैः मुञ्चन्ती सम्प्रयुक्तकः॥१०५॥ अप्रियाण्यपि वोढव्यो मन्त्रिभिः पृथिवीपतिः। यथा स्वदोषनाशाय विदुरेणाम्बिकासुतः॥१०६॥ सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम्। अब्रुवन्विब्रुवन्चापि नरो भवति किल्बिषी॥ १०७॥ तस्मात्सभ्यः सभां गत्वा रागद्वेषविवर्जितः। वचस्तथाविधं ब्रूयाद्यथा न नरकं व्रजेत्॥ १०८॥ अपि स्वल्पमसत्यं यः पुरो वदति भूभुजाम्। दयानाञ्च विनश्येत स गुरु सुमहानपि॥१०९॥ अभिभूतोऽप्यवज्ञातो यो राज्ञो द्वारि तिष्ठति। स तु राज्ञां श्रियं भुङ्क्ते नाभिमानी कदाचन॥११०॥ दृष्टोऽपि राजा पदत्राय तत्पुण्ये बधिरग्रनः। यतो भूमिपतिः सेव्यस्त्याज्यो दूरतरेण सः॥१११॥ सुवर्ण पुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः। शूरश्च कृतविद्यश्च

यश्च जानाति सेवितुम् ॥ ११२ ॥ ये च प्राहुर्दुरात्मानो दुराराध्या महीभुजः । प्रमादालस्यजाड्यानि ख्यापितानि निजानि तैः ॥ ११३ ॥ अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन् । प्राप्नुयाद्बुद्ध्यवज्ञानमपमानञ्च शाश्वतम् ॥११४॥ एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता । बुद्धिर्बुद्धिमता युक्ता हन्ति राष्ट्रं सनायकम् ॥ ११५ ॥ न तच्छस्त्रैर्न नागेन्द्रैर्न हयैर्न च पत्तिभिः । कार्यं संसिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम् ॥ ११६ ॥ जनं जनपदा नित्यमर्चयन्ति नृपार्चितम् । नृपेणावमतो यस्तु स सर्वैरवमन्यते ॥ ११७ ॥ यं यं नृपोऽनुरागेण सम्भावयति संसदि । तस्य तस्योत्सारणाय यतन्ते राजवल्लभाः ॥ ११८ ॥ आज्ञा कीर्तिः पालनं सज्जनानां दानं भोगो मित्रसंरक्षणञ्च । येषामेते षड्गुणा न प्रवृत्ताः कोऽर्थस्तेषां पार्थिवोपाश्रयेण ॥ ११९ ॥ यदि तव हृदयं विद्वन्सुनयं स्वप्नेऽपि मा स्म सेविष्ठाः । सचिवजितं षण्ढजितं युवतिजितञ्चैव राजानम् ॥ १२० ॥ अविद्वानपि भूपालो विद्यावृद्धोपसेवया । परां श्रियमवाप्नोति जलासन्नतरुर्यथा ॥१२१॥ गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः । चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ १२२ ॥ षट्कर्णो भिद्यते मन्त्रश्चतुःकर्णः स्थिरो भवेत् । द्विकर्णस्य तु मन्त्रस्य ब्रह्माप्यन्तं न गच्छति ॥ १२३ ॥ यः काकिणीमप्यपथप्रपन्नां समुद्धरेन्निष्कसहस्रतुल्याम् । कालेषु कोटिष्वपि

णात्प्राणाः क्षीयन्ते प्राणिनां यथा । तथा राज्ञामपि प्राणाः क्षीयन्ते राष्ट्रकर्षणात् ॥ १३७ ॥ कर्मणा मनसा वाचा चक्षुषाऽपि चतुर्विधम् । प्रसादयति लोकं यस्तं लोको नु प्रसीदति ॥ १३८ ॥ ब्राह्मणानां यथा धर्मो दानमध्ययनं तपः । क्षत्रियाणां तथा कृष्ण समरे देह पातनम्॥ १३९ ॥ अधर्मः क्षत्रियस्यैष यच्छय्यामरणं भवेत् । विसृजन् श्लेष्म मूत्राणि कृपणं परिदेवयन् ॥ १४० ॥ गृहे यत्क्षत्रियस्यापि निधनं तद्विगर्हितम् । अधर्मः सुमहानेष यच्छय्यामरणं गृहे ॥ १४१ ॥ अधर्मः क्षत्रियस्यैष यद्व्याधिमरणं गृहे । यद्-योनिधनं याति सोऽस्य धर्मः सनातनः ॥ १४२ ॥ कृपणं विलपन्नार्तो जरयाऽभिपरिप्लुतः । म्रियते रुदतां मध्ये ज्ञातीनां न स पूरुषः ॥ १४३ ॥ यो हि तेजो यथाशक्ति न दर्शयति विक्रमात् । क्षत्रियो जीविताकांक्षी स्तेन इत्येव तं विदुः ॥ १४४ ॥ यो न दर्शयते तेजः क्षत्रियः काल आगते । सर्वभुतानि तं पार्थ सदा परिभवन्त्युत ॥१४५॥ नादण्डः क्षत्रियो भाति नादण्डो भूमिमश्नुते । नादण्डस्य प्रजा राज्ञः सुखं विन्दन्ति भारत ॥ १४६ ॥ अविक्षतेन देहेन प्रलयं योऽधिगच्छति । क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः ॥१४७॥ परमं यत्नमातिष्ठेत्स्तेनानां निग्रहे नृपः । स्तेनानां निग्रहादस्य यशो राष्ट्रञ्च वर्धते ॥ १४८ ॥ विक्रोशन्त्यो यस्य राष्ट्राद्ध्रियन्ते दस्युभिः प्रजाः । संपश्यतः सभृत्यस्य

मृताः स्म न तु जीवति ॥ १४९ ॥ अश्वा यस्य जयस्तस्य यस्याश्वास्तस्य मेदिनी । अश्वा यस्य यशस्तस्य यस्याश्वास्तस्य काञ्चनम् ॥ १५० ॥ निपत्य युधि वेगेन भिनत्ति सर्वमश्विनाम् । शत्रुं भिनत्ति यस्यैकः शूरो वाजिसमाश्रितः ॥ १५१ ॥ ध्वजाग्रैर्विभवेताऽपि आप्तोऽपि गुरुभारतः । न मुञ्चति रणे नाथमतः कोऽन्यो हयात्सुहृत् ॥ १५२ ॥ दूरस्थोऽपि वशी शत्रुर्न शेते रजनीष्वपि । तस्य भीता गृहे यस्य हरयो वेगवत्तराः ॥१५३॥ एकः शतं योधयति प्राकारस्थो धनुर्धरः । शतं शतसहस्राणि तस्माद् दुर्गं विधीयते ॥१५४॥ पुष्पैरपि न योद्धव्यं किं पुनर्निशितैः शरैः । जये भवति सन्देहः प्रधानपुरुषक्षयः ॥ १५५ ॥ आहवेषु मिथोऽन्योन्यं जिघांसन्तो महीक्षितः । युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥ १५६ ॥ यत्र तत्र हतः शूरः शत्रुभिः परिवारितः । अक्षयाँल्लभते लोकान्यदि क्लीबं न भाषते ॥ १५७ ॥ यस्तु भीतः परावृत्तः सङ्ग्रामे हन्यते परैः । भर्तुर्यद्दुष्कृतं किञ्चित्तत्सर्वं प्रतिपद्यते ॥ १५८ ॥ यस्माद्वधात्स्यान्नयस्त्वभिघातादपयस्यापि । दुष्प्रहत्त्वमावेव तस्मात्तं विदुर्बुधाः ॥ १५९ ॥ यत्र सभायां कौटिल्यो दम्भश्चरति भूपतेः । सभास्तत्र न मुञ्चन्ति नेता येऽसाधु पश्यति ॥१६०॥ राजदण्डभयादेके पापाः पापं न कुर्वते । यमदण्डभयादेके परलोकभयादपि ॥ १६१ ॥ परस्परभयादेके पापाः पापं

न कुर्वते । एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम् ॥ १६२ ॥ दण्डस्य हि भयादेके न खादन्ति परस्परम् । अन्धे तमसि मज्जेयुर्यदि दण्डो न पालयेत् ॥ १६३ ॥ ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा । दण्डस्यैव भयादेते मनुष्या वर्त्मनि स्थिताः ॥ १६४ ॥ नाभीतो यजते राजन्नाभीतो दातुमिच्छति । नाभीतः पुरुषः कश्चित्समये स्थातुमिच्छति ॥ १६५ ॥ क्षममाणं नृपं नित्यं नीचः परिभवेज्जनः । हस्तियन्ता गजस्येव शिर एवारुरुक्षति ॥१६६॥ तस्मान्नैव मृदुर्नित्यं तीक्ष्णो नैव भवेन्नृपः । वासन्तार्क इव श्रीमान्न शीतो न च घर्मदः ॥ १६७ ॥ सम्यग्दण्डधरो नित्यं राजा धर्ममवाप्नुयात् । नृपस्य सततं दण्डः सम्यग्धर्मः प्रशस्यते ॥ १६८ ॥ सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः । दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते ॥१६९॥ अव्रता ह्यनधीयाना यत्र भैक्षचरा द्विजाः । तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदो हि सः ॥ १७० ॥ पिताऽऽचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः । नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मे न तिष्ठति ॥१७१॥ कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतो जनः । तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा ॥ १७२ ॥ दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति । दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ १७३ ॥ समीक्ष्य स धृतः सम्यक् सर्वा रञ्जयति प्रजाः । असमीक्ष्य प्रणीतस्तु

नित्यं शास्त्रविदां तात यथाधर्मार्थदर्शिनाम् ॥१८७॥ निग्रहेण हि पापानां साधूनां संग्रहेण च । द्विजातय इवेज्याभिः पूयन्ते सततं नृपाः ॥१८८॥ क्षन्तव्यं प्रभुणा नित्यं क्षिपतां कार्यिणां नृणाम् । बालवृद्धातुराणाञ्च कुर्वता हितमात्मनः ॥१८९॥ यः क्षिप्तो मर्षयत्य तैस्तेन स्वर्गे महीयते । यस्त्वैश्वर्यान्न क्षमते नरकं तेन गच्छति ॥१९०॥ प्रजानां धर्मषड्भागो राज्ञो भवति रक्षतः । अधर्मादपि षड्भागो भवत्यस्य ह्यरक्षतः ॥१९१॥ यानि मिथ्याऽभिभूतानां पतन्त्यश्रूणि रोदताम् । तानि सन्तापकान्घ्नन्ति सपुत्रपशुबान्धवान् ॥ १९२ ॥ मा त्वं तात बले स्थित्वा बाधिष्ठा दुर्बलं जनम् । नहि दुर्बलदग्धानां काले किञ्चित्प्ररोहति ॥१९३॥ मा तात सम्पदामग्रमारूढोऽस्मीति विश्रमीः । दूरारोहपरिभ्रंशविनिपातो हि दारुणः ॥१९४॥ वित्तं यदा यस्य समं विभक्तं गूढश्चरः संनिभृतश्च मन्त्रः । न चाप्रियं प्राणिषु यो ब्रवीति स सागरान्तां पृथिवीं प्रशास्ति ॥१९५॥ यस्तात न क्रुध्यति सर्वकालं भृत्यस्य भक्तस्य हिते रतस्य । तस्मिन् भृत्या भर्त्तरि विश्वसन्ति न चैनमापत्सु परित्यजन्ति ॥१९६॥ व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः । प्रविश्य हि घ्नन्ति शठास्तथावि-धानसंवृताङ्गान्निशिता इवेषवः ॥ १९७ ॥ राजन् दुधुक्षसि यदि क्षितिधेनुमेतां तेनाद्य वत्समिव लोकममुं पुषाण । तस्मिंश्च सम्यगनिशं परिपोष्यमाणे नानाफलैः फलति कल्पलतेव भूमिः ॥ १९८ ॥ नृपः कामासक्तो गणयति न कार्यं न च

हितम् यथेष्टं स्वच्छन्दमटति किल मत्तो गज इव । यदा मानध्मातः पतति तु यदा शोकगहने तदा मूढे दोषानिपाति न निजं वेत्स्यविनयम् ॥१९९॥ उत्खातान् प्रतिरोपयन् कुसुमितांश्चिन्वँल्लघून्वर्धयन् अत्युच्चान्नमयन्नतान् समुन्नयन्विश्लेषयन् संहतान् । क्षुद्रान्कण्टकिनो बहिर्निरसयन् म्लानान्पुनः सेचयन् मालाकार इव प्रयोगनिपुणो राजा चिरं नन्दति ॥ २०० ॥

## संकीर्णप्रकरणम् ५९

शरणाऽपि कर्णयोर्या हरिनामाङ्किता यदि । सादरं श्रूयते सद्भिः सूक्तिर्मुक्तान्विता यथा ॥ १ ॥ कल्याणी बत गाथेयं लौकिकी प्रतिभाति माम् । एति जीवन्तमानन्दो नरं वर्षशतादपि ॥२॥ अर्थनाशं मनस्तापं गृहे दुश्चरितानि च । वञ्चनं चापमानं च मतिमान्न प्रकाशयेत् ॥ ३ ॥ बालुका [illegible] पिपासा मोक्षाशा लौकिके मते । आपाततरि च दुःखाय प्रथमेऽतन्निरर्थकम् ॥ ४ ॥ को न याति वशं लोके मुखे पिण्डेन पूरितः । मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥५॥ लोकेषु निर्धनो दुःखी ऋणग्रस्तस्ततोऽधिकम् । ताभ्यां रोगयुतो दुःखी तेभ्यो दुःखी कुभार्यकः ॥ ६ ॥ वातुलस्तमितस्य गुणयुक्तस्य चार्थिनः । दुर्लभः खलु संपोषः महीपालेभपोषित ॥ ७ ॥ आरोप्यते शिला शैले यत्नेन महता यथा । निपात्यते क्षणेनाधस्तथात्मा गुणदोषयोः ॥ ८ ॥

कलहान्तानि हर्म्याणि कुवाक्यान्तं च सौहृदम्। कुराजा-
न्तानि राष्ट्राणि कुकर्मान्तं यशो नृणाम् ॥ ९ ॥ अनिष्टा-
दिष्टलाभेऽपि न गतिर्जायते शुभा। यत्रास्ते विषसंसर्गो-
ऽमृतं तदपि मृत्यवे ॥ १० ॥ प्रभूतवयसः पुंसो धियः
पाकः प्रवर्तते। जीर्णस्य चन्दनतरोरामोद उपजायते ॥११॥
आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः। बकास्तत्र न
बध्यन्ते मौनं सर्वार्थसाधनम् ॥१२॥ अप्रियाण्यपि कुर्वाणो
यः प्रियः प्रिय एव सः। दग्धमन्दिरसारेऽपि कस्य वह्ना-
वनादरः ॥ १३ ॥ मौनं कालविलम्बश्च भ्रुकुटी भूमिदर्श-
नम्। प्रयाणमन्यवार्त्ता च नकारः षड्विधः स्मृतः ॥१४॥
दुःखितेभ्योऽपि भूतेभ्यो मृत्युरोगजरादिभिः। भूयः को
दुःखमपरं सघृणो दातुमर्हति ॥ १५ ॥ दुःखं ददाति योऽ-
न्यस्य ध्रुवं दुःखं स विन्दति। तस्मान्न कस्यचित् दुःखं
दातव्यं दुःखभीरुणा ॥१६॥ चोद्यमानोऽपि पापेषु शुद्धात्मा
न प्रवर्तते। वार्यमाणोऽपि पापेभ्यः पापात्मा पापमिच्छति
॥ १७ ॥ आश्रमेषु यथोक्तेषु यथोक्तं ये द्विजातयः। वर्तन्ते
संयतात्मानो दुर्गाण्यतितरन्ति ते ॥ १८ ॥ नाद्रव्ये निहिता
काचित्क्रिया फलवती भवेत्। न व्यापारशतेनापि शुक-
वत्पाठ्यते बकः ॥ १९ ॥ उत्तमे निर्गुणं गोत्रे नापत्यमुप-
जायते। आकरे पद्मरागाणां जन्म काचमणेः कुतः ॥२०॥
उत्सवे व्यसने युद्धे दुर्भिक्षे राष्ट्रविप्लवे। राजद्वारे श्मशाने

॥३३॥ विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम् । अमि-
त्रादपि सद्वृत्तममेध्यादपि काञ्चनम् ॥ ३४ ॥ ब्राह्मे मुहूर्ते
बुध्येत धर्मार्थौ चानुचिन्तयेत् । कायक्लेशांश्च तन्मूलान्
वेदतत्त्वार्थमेव च ॥ ३५ ॥ एतद्देशप्रसूतस्य सकाशादग्र-
जन्मनः । स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः
॥ ३६ ॥ शत्रुवाक्यामृतं श्रुत्वा तेन सौहार्दमार्जनम् । नाहि
वैरेण कर्तव्यमात्मनः शुभमिच्छता ॥ ३७ ॥ अपमानं
पुरस्कृत्य मानं कृत्वा च पृष्ठतः । स्वकार्यमुद्धरेत्प्राज्ञः कार्य-
ध्वंसो हि मूर्खता ॥ ३८ ॥ न स्वल्पस्य कृते भूरि नाशये-
न्मतिमान्नरः । एतदेवात्र पाण्डित्यं यत्स्वल्पाद्भूरिरक्षणम्
॥ ३९ ॥ किमाराध्यं सदा पुण्यं कश्च सेव्यः सदागमः ।
को ध्येयो भगवान्विष्णुः किं काम्यं परमं पदम् ॥ ४० ॥
लुब्धानां याचकः शत्रुश्चौराणां चन्द्रमा रिपुः । कुलटानां
पतिः शत्रुर्मूर्खाणां बोधको रिपुः ॥ ४१ ॥ दिवा पश्यति
नोलूकः काको नक्तं न पश्यति । अपूर्वः कोऽपि कामा-
न्धो दिवा नक्तं न पश्यति ॥ ४२ ॥युक्तमुक्तं पुरा विद्भि-
श्चिन्ता ज्वरः सुदारुणा । न भेषजैर्लङ्घनैर्वा न चान्यैरुप-
शाम्यति ॥ ४३ ॥ किं करिष्यन्ति वक्तारः श्रोता यत्र न
विद्यते । नग्नक्षपणके देशे रजकः किं करिष्यति ॥ ४४ ॥
किं कुलेन विशालेन शीलमेवात्र कारणम् । कृमयः किं न
जायन्ते कुसुमेषु सुगन्धिषु ॥ ४५ ॥ कुलानि समुपेतानि

गोभिः पुरुषोऽन्यथा। कुलमसवर्णा न गच्छन्ति यानि हीनानि
वृत्ततः॥४६॥कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥४७॥ ऋतिरभ्यया कु-
लिवाहैर्वेदस्योत्सादनेन च। कुलान्यकुलतां यान्ति धर्मस्याति
क्रमेण च ॥४८॥ अकुलीनः कुलीनो वा मर्यादां यो न लङ्घयेत्।
धर्मापेक्षी मृदुर्दान्तः स कुलीनशताद्वरः॥४९॥ न कन्यायाः पिता
विद्वान् गृह्णीयाच्छुल्कमण्वपि। गृह्णन् शुल्कं हि लोभेन स्यान्
नरोऽपत्यविक्रयी॥५०॥ अदानमपि कन्यायाः पश्यतश्चेदनुमन्यते
। विक्रयं चाप्यपत्यस्य कः कुर्यात् पुरुषो भुवि ॥५१॥ आ
चरेत्सदृशीं वार्ता सदा विषममाचरेत्। पितोराज्ञानुसारी
स्यात्सुपुत्रः कुलदीपकः ॥ ५२ ॥ यान्ति न्यायप्रवृत्तस्य
तिर्यञ्चोऽपि सहायताम्। अपन्थानं तु गच्छन्तं सोदरोऽपि
विमुञ्चति॥५३॥ धनपदर्शनस्यार्थे यानानि च यः स्वयम्।
स्वजान्ति तामपि पुत्रा मातरं दारवत् ॥ ५४ ॥ किं करोमि
क्व गच्छामि को वेदानुद्धरिष्यति। मा चिन्तय वरारोहे च
द्धाचार्योऽस्मि भूतले ॥ ५५॥ योऽधीत्य विधिवद्वेदान् स स
वैर्वा गुरुभवेत्। न च ब्रास्य उनर्भीतो हि गुरुश्चिह्नमर्हति ॥
॥५६॥ यत्कर्म कुर्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः। त
त्प्रयत्नेन कुर्वीत विपरीतन्तु वर्जयेत् ॥ ५७ ॥ मातरमा मा
त्पुत्रमस्पर्धाय शठा न च मानिनः। न च लोकस्याज्ञोता न
च सपत्नीमस्त्रियः ॥ ५८ ॥ मूर्खो वा मृतपुत्रो वा या वा
को वा महात्मनः। दैवायत्तं कुले जन्म मदायत्तं हि पौरु

षम् ॥ ५९ ॥ द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥ ६० ॥ अर्कं
करोति हि जरा राजामात्यभिषग्यतीन् । विडम्बयति पण्य-
स्त्रीमल्लगायनसेवकान् ॥ ६१ ॥ मनःशौचं कर्मशौचं कुलशौ-
चञ्च भारत । शरीरशौचं वाक्शौचं शौचंपञ्चविधं स्मृतम्
॥ ६२ ॥ अभिवादयेत वृद्धान्दद्याच्चैवासनं स्वयम् । कृताञ्जलि-
रुपासीत गच्छतः पृष्ठतोऽन्वियात् ॥ ६३ ॥ अभिवादन-
शीलस्य नित्यं वृद्धोपसेविनः । चत्वारि तस्य वर्धन्ते आयु-
र्विद्या यशो बलम् ॥ ६४ ॥ ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः
स्थविर आयति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिप-
द्यते ॥ ६५ ॥ स एव धन्यो विपदि स्वरूपं यो न मुञ्चति ।
त्यजत्यर्ककरैस्तप्तं हिमं देहं न शीतताम् ॥ ६६ ॥ दृष्टिपूतं
न्यसेत्पादं वस्त्रपूतं जलं पिबेत् । सत्यपूतां वदेद्वाचं मनःपूतं
समाचरेत् ॥ ६७ ॥ अवृत्तिकं त्यजेद्देशं वृत्तिं सोपद्रवां त्य-
जेत् । त्यजेन्मायाविनं मित्रं धनं प्राणहरं त्यजेत् ॥ ६८ ॥
यस्मिन्देशे न सम्मानो न प्रीतिर्न च बान्धवाः।न च विद्या-
गमोऽप्यस्ति न तत्र दिवसं वसेत् ॥ ६९ ॥ धनिकः श्रो-
त्रियो राजा नदी वैद्यस्तु पञ्चमः । पञ्च यत्र न विद्यन्ते न
तत्र दिवसं वसेत् ॥ ७० ॥ त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे
कुलं त्यजेत् । ग्रामं जनपदस्यार्थे ह्यात्मार्थे पृथिवीं त्यजेत्
॥ ७१ ॥ चलत्येकेन पादेन तिष्ठत्येकेन पण्डितः । नासमीक्ष्य

तदवसीदति॥८५॥ यत्र सूक्तं दुरुक्तञ्च समं स्यान्मधुसूदन। न तत्र प्रलपेत्प्राज्ञो बधिरेष्विव गायनम् ॥ ८६ ॥ शोभन्ते विद्यया विप्राः क्षत्रिया विजयश्रिया। श्रियोऽनुकूलदानेन लज्जया च कुलाङ्गनाः ॥ ८७ ॥ नवे वयसि यः शान्तः स शान्त इति कथ्यते। धातुषु क्षीयमाणेषु शान्तिः कस्य न जायते ॥ ८८ ॥ जले तैलं खले गुह्यं पात्रे दानं मनागपि। प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः ॥८९॥ उदारस्य तृणं वित्तं शूरस्य मरणं तृणम्। विरक्तस्य तृणं नारी निःस्पृहस्य तृणं जगत् ॥९०॥सम्पत्सरस्वती सत्यं सन्तानं सदनुग्रहः। सत्ता सुकृतसम्भारः सकाराः सप्त दुर्लभाः ॥ ९१ ॥ सा श्रीर्या न मदं कुर्यात्स सुखी तृष्णयोज्झितः। तन्मित्रं यत्र विश्वासः पुरुषः स जितेन्द्रियः॥९२॥ अव्यवस्थितचित्तस्य न जने न वने सुखम्। जने क्लिश्नाति सङ्गेन वने सङ्गविवर्जितः ॥ ९३ ॥ क्वचिद्रुष्टः क्वचित्तुष्टो रुष्टस्तुष्टः क्षणे क्षणे। अव्यवस्थितचित्तस्य प्रसादोऽपि भयङ्करः॥९४॥ यस्मिन् रुष्टे भयं नास्ति तुष्टे नैव धनागमः। निग्रहानुग्रहौ न स्तः स रुष्टः किं करिष्यति ॥ ९५ ॥ व्याख्यानान्ते श्मशानान्ते भोजनान्ते च या मतिः। सा मतिः सर्वदा चेत्स्यात्को न मुच्येत बन्धनात् ॥ ९६ ॥ पण्डितैः सह साङ्गत्यं पण्डितैः सह संकथाः। पण्डितैः सह मित्रत्वं कुर्वाणो नावसीदति ॥९७॥ धनधान्यप्रयोगेषु विद्यासंग्रहणेषु च।

आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत् ॥ ९८ ॥
यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय
किमु यत्र चतुष्टयम् ॥९९॥ न पश्यति च जन्मान्धः कामान्धो
नैव पश्यति । न पश्यति मदोन्मत्तो अर्थी दोषं न पश्यति
॥१०० ॥ नास्ति कामसमो व्याधिर्नास्ति मोहसमो रिपुः ।
नास्ति क्रोधसमो वह्निर्नास्ति ज्ञानात्परं सुखम् ॥ १०१ ॥
हस्तस्य भूषणं दानं सत्यं कण्ठस्य भूषणम् । श्रोत्रस्य भूषणं
शास्त्रं भूषणैः किं प्रयोजनम् ॥१०२॥ लालने बहवो दोषा
स्ताडने बहवो गुणाः । तस्मात्पुत्रञ्च शिष्यञ्च ताडयेन्न तु
लालयेत् ॥ १०३ ॥ लालयेत्पञ्च वर्षाणि दश वर्षाणि ताड
येत् । प्राप्ते षोडशके वर्षे पुत्रं मित्रवदाचरेत्॥१०४॥आदा
नस्य प्रदानस्य कर्तव्यस्य च कर्मणः । क्षिप्रमक्रियमाणस्य
कालः पिबति तद्रसम् ॥ १०५ ॥ किन्नु मे स्यादिदं कृत्वा
किन्नु मे स्यादकुर्वतः । इति सञ्चिन्त्य मनसा प्राज्ञः कुर्वीत
वा न वा ॥ १०६ ॥ हते पार्थिवि का रक्षा पक्षो रक्षय-
पातपत । मृतः पतितकायोऽपि यशः कायेन जीवति ॥१०७
॥ निमेषमात्रमपि तु यथा गच्छन्न तिष्ठति । तस्माद्देहेष्वनित्येषु
कीर्तिमेकामुपार्जय ॥ १०८ ॥ न सञ्चयमसारस्य नरो भद्राणि
पश्यति । सञ्चयं पुनरावास यदि जीवति पश्यति ॥१०९ ॥
षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता । निद्रा तन्द्रा
भयं क्रोध आलस्यं दीर्घसूत्रता ॥ ११० ॥ अनारोग्यमनस्य-

युष्यमस्वर्ग्यंञ्चातिभोजनम् । अपुण्यं लोकविद्विष्टं तस्मात्त-त्परिवर्जयेत् ॥१११॥ श्रोतव्यं हितकामानां सुहृदां हितमिच्छताम् । अकर्तव्यो हि निर्बन्धो निर्बन्धश्च क्षयोदयः ॥ ११२ ॥ व्याकुलोऽपि विपत्पातैः स्मरेद्विष्णुं सदा हृदि । शरतल्पगतो भीष्मः सस्मार परमेश्वरम् ॥ ११३ ॥ सौहृदेन परित्यक्तं निःस्नेहं खलवत्त्यजेत् । सोदरं भ्रातरमपि किमुतान्यं पृथग्जनम् ॥ ११४ ॥ सतां मतमतिक्रम्य योऽसतां वर्तते मते। शोचन्ते व्यसने तस्य सुहृदो न चिरादिव॥११५॥ सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन । नैकत्र परिनिष्ठास्ति ज्ञानस्य पुरुषे क्वचित् ॥ ११६ ॥ आत्मोत्कर्षं न मार्गेत परेषां परिनिन्दया । विपश्चिद्गुणसम्पन्नः प्राप्नोत्येव महद्यशः ॥ ११७ ॥ विश्वासप्रतिपन्नानां वञ्चने का विदग्धता । अङ्कमारुह्य सुप्तानां हन्तुः किन्नाम पौरुषम् ॥११८॥ यदपथ्यवतामायुर्यदनीतिमतां श्रियः । तदेतत्काकतालीयं तदेतच्च घुणाक्षरम् ॥ ११९ ॥ दूरस्थोऽपि समीपस्थो यो यस्य हृदि वर्तते । यो यस्य हृदये नास्ति समीपस्थोऽपि दूरगः ॥ १२० ॥ सर्वेषामेव शौचानामर्थशौचं परं स्मृतम् । योऽर्थे शुचिः स हि शुचिर्न मृद्वारिशुचिः शुचिः ॥ १२१ ॥ नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः । जानन्नपि हि मेधावी जडवल्लोकमाचरेत् ॥ १२२ ॥ आपद्युन्मार्गगमने कार्यकालात्ययेषु च । कल्याणवचनं ब्रूयादपृष्टोऽपि हितो नरः

॥ १२३ ॥ मनसापि हि भूतानां योऽभिद्रुह्यति किंचन । यमाग्नि तस्य नान्यत्र लोकेऽस्मिन्नात्र संशयः ॥ १२४ ॥ यं मातापितरौ क्लेशं सहेते सम्भवे नृणाम् । न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ॥ १२५ ॥ तयोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा । तेषु हि त्रिषु तुष्टेषु तपः सर्वं समाप्यते ॥ १२६ ॥ मनसैव कृतं राम न शरीरकृतं कृतम् । येनैवालिङ्गिता कान्ता तेनैवालिङ्गिता सुता ॥ १२७ ॥ मक्षिका व्रणमिच्छन्ति धनमिच्छन्ति पार्थिवाः । नीचाः कलहमिच्छन्ति शान्तिमिच्छन्ति साधवः ॥ १२८ ॥ अस्त्यगुणस्तुल्या जायते स्वात्मनस्तथा । कर्णिकारं मृग-चीति वदन्तो नोपहास्यताम् ॥ १२९ ॥ रोगशोकपरीतापबन्धनव्यसनानि च । आत्मापराधवृक्षाणां फलान्येतानि देहिनाम् ॥ १३० ॥ पवित्रं धन्यमायुष्यमपमृत्युभयापहम् । शरीरमलसम्पाते स्नानमोक्षकरं परम् ॥ १३१ ॥ कायश्च कर्मसामर्थ्यं स्थैर्यं क्लमसहिष्णुता । दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते ॥ १३२ ॥ शारीराज्जायते व्याधिर्मानसो नात्र संशयः । मानसाज्जायते चापि शारीर इति निश्चयः ॥ १३३ ॥ जनिता चोपनेता च यश्च विद्यां प्रयच्छति । अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥ १३४ ॥ राजपत्नी गुरोः पत्नी मित्रपत्नी तथैव च । पत्नीमाता स्वमाता च पञ्चैता मातरः स्मृताः ॥ १३५ ॥ न स्त्रीभिः समूढः स्या-

द्रादरागवशीकृतः । पुत्रशोकाद्दशरथो जीवं जायाजितोऽत्य-
जत् ॥ १३६ ॥ युक्तियुक्तमुपादेयं वचनं बालकादपि ।
अन्यत्तृणमिव त्याज्यमप्युक्तं परमेष्ठिना ॥ १३७ ॥ परप-
त्नी तु या स्त्री स्यादसम्बन्धा च योनितः । तां ब्रूयाद्भव-
तीत्येवं सुभगे भगिनीति च ॥ १३८ ॥ स्वयं कर्म करोत्या-
त्मा स्वयं तत्फलमश्नुते । स्वयं भ्रमति संसारे स्वयं मोक्षञ्च
गच्छति ॥ १३९ ॥ बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो
बलम् । वने सिंहो मदोन्मत्तः शशकेन निपातितः ॥ १४०॥
अर्थिप्रश्नकृतौ लोके सुलभौ तौ गृहे गृहे । दाता चोत्तरद-
श्चैव दुर्लभौ पुरुषौ भुवि ॥ १४१ ॥ तीव्रे तपसि लीनाना-
मिन्द्रियाणां न विश्वसेत् । विश्वामित्रोऽपि मोरकण्ठः कण्ठे
जग्राह मेनकाम् ॥ १४२ ॥ भक्तं रक्तं सदा सक्तं निर्दोषं
न परित्यजेत् । रामस्त्यक्त्वा सतीं सीतां शोकशल्याकुलो-
भवत् ॥१४३॥ या वेदबाह्याः स्मृतयो याश्च काश्च कुदृ-
ष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः
॥ १४४ ॥ अपूज्या यत्र पूज्यन्ते पूज्यानान्तु विमानना ।
त्रीणि तत्र प्रवर्तन्ते दुर्भिक्षं मरणं भयम् ॥ १४५ ॥ हिता-
शी स्यान्मिताशी स्यात्कालभोजी जितेन्द्रियः । पश्यन् रो-
गान्बहून् कष्टान् बुद्धिमान्विषमाशनात् ॥ १४६ ॥ पुण्य-
स्य फलमिच्छन्ति पुण्यं नेच्छन्ति मानवाः । न पापफल-
मिच्छन्ति पापं कुर्वन्ति यत्नतः ॥ १४७ ॥ सत्यं तीर्थं क्षमा

तीर्थं तीर्थमिन्द्रियनिग्रहः । सर्वभूतदया तीर्थं सर्वत्रार्जवमेव
च ॥ १४८ ॥ ज्ञानं तीर्थं धृतिस्तीर्थं पुण्यं तीर्थमुदाहृतम् ।
तीर्थानामपि तत्तीर्थं विशुद्धिर्मनसः परा ॥ १४९ ॥ उप
देशक्रमो राम व्यवस्थामात्रपालनम् । ज्ञप्तेस्तु कारणं शुद्धा
शिष्यप्रज्ञैव केवला ॥ १५० ॥ अनारम्भो हि कार्याणां
प्रथमं बुद्धिलक्षणम् । आरब्धस्यान्तगमनं द्वितीयं बुद्धिल
क्षणम् ॥ १५१ ॥ दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तरदाय
कः । स सर्पे च गृहे वासो मृत्युरेव न संशयः ॥ १५२ ॥
अहो साहजिकं प्रेम दूरादपि विराजते । चकोरनयनद्वन्द्व
माह्लादयति चन्द्रमाः ॥ १५३ ॥ सख्योः सोदर्ययोर्भ्रात्रो
र्दम्पत्योर्वा परस्परम् । कस्यचिन्नाभिजानामि प्रीतिं निष्का
रणामिह ॥ १५४ ॥ पुत्रं हि मातापितरौ त्यजतः पतित
प्रियम् । लोको रक्षति चात्मानं पश्य स्वार्थस्य सारताम्
॥ १५५ ॥ न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नमपि मूलानि कृन्तति ॥ १५६ ॥ कृत
वैरे न विश्वासः कार्यस्त्विह सुहृद्यपि । छन्नं सन्तिष्ठते वैरं
गूढोऽग्निरिव दारुषु ॥ १५७ ॥ संक्षेपो नीतिशास्त्राणामवि
श्वासः परो मतः । नृषु तस्मादविश्वासः पुष्कलं हितमा
त्मनः ॥१५८॥ यथा सुनिपुणः सम्यक् परदोषेक्षणे रतः ।
तथा चेन्निपुणः स्वेषु को न मुच्येत बन्धनात् ॥ १५९ ॥
परोऽपि हितवान्बन्धुर्बन्धुरप्यहितः परः । अहितो देहजो

व्याधिर्हितमारण्यमौषधम् ॥ १६० ॥ तज्ज्ञानं स च शास्त्रार्थस्तद्वैदग्ध्यमनिन्दितम् । सच्छिष्याय विरक्ताय साधो यदुपदिश्यते ॥ १६१ ॥ तैलाद्रक्षेज्जलाद्रक्षेद्रक्षेच्छिथिलबन्धनात् । मूर्खहस्ते न दातव्यमेवं वदति पुस्तकम् ॥ १६२ ॥ उष्ट्राणाञ्च विवाहेषु गीतं गायन्ति गर्दभाः । प्रशंसन्ति परस्परमहो रूपमहो ध्वनिः ॥ १६३ ॥ वृत्तं यत्नेन संरक्षेद्वित्तमायाति याति च । अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥ १६४ ॥ निरर्थकं पदं नास्ति नास्ति मूलमनौषधम् । अयोग्यः पुरुषो नास्ति योजकस्तत्र दुर्लभः ॥१६५॥ शरीरं धर्मसर्वस्वं रक्षणीयं प्रयत्नतः । शरीरात्स्रूयते धर्मः पर्वतात्सलिलं यथा ॥ १६६ ॥ धर्मार्थकाममोक्षाणां प्राणाः संस्थिति हेतवः । तं निघ्नता किन्न हतं रक्षता किन्न रक्षितम् ॥ १६७ ॥ संतापाद्भ्रश्यते रूपं संतापाद्भ्रश्यते बलम् । संतापाद्भ्रश्यते ज्ञानं संतापाद्व्याधिमृच्छति ॥ १६८॥ विपत्तिष्वव्यथो दक्षो नित्यमुत्थानवान्नरः। अप्रमत्तो विनीतात्मा नित्यं भद्राणि पश्यति ॥ १६९ ॥ मूर्खा यत्र न पूज्यन्ते धान्यं यत्र सुसंचितम् । दाम्पत्यकलहो नास्ति तत्र श्रीः स्वयमागता ॥ १७० ॥ तीर्थेषु पशुयज्ञेषु काष्ठपाषाणमृण्मये । प्रतिमायां मनो येषां ते नरा मूढचेतसः ॥१७१॥ शंखचक्रे मृदा यस्तु कुर्यात्तप्तायसेन वा । स शूद्रवद्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥ १७२ ॥ धर्मात्प्रच्युतशीलं

रि पुरुषं पापनिश्चयम् । अवश्यं दुःखमाप्नोति इत्यादा
धीविर्षं यथा ॥ १७१ ॥ आचाराल्लभते ह्यायुराचारादी
प्सिताः प्रजाः । आचाराद्धनमक्षय्यमाचारो हन्त्यलक्ष
णम् ॥ १७२ ॥ सर्वलक्षणहीनोऽपि यः सदाचारवान्नरः ।
श्रद्दधानोऽनसूयश्च शत वर्षाणि जीवति ॥ १७३ ॥ आ
चाराद्विच्युतो विप्रो न वेदफलमश्नुते । आचारेण तु सं
युक्तः संपूर्णफलभाग्भवेत् ॥ १७४ ॥ दुराचारो हि पुरुषो
लोके भवति निन्दितः । दुःखभागी च सततं व्याधितोऽ
ल्पायुरेव च ॥१७५॥ न मे स्तेनो जनपदे न कदर्यो न म
द्यपः । नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतः ॥१७६॥
मायाधिपे राजदण्डे वेश्यानुसे च भारत । मद्यद्यूतपरस्त्रीषु
धनं गच्छति पापिनाम् ॥ १७९ ॥ अतिशरीरेचपादता
स्वजनस्यानादरो भवति । मलये भिल्लपुरन्ध्री चन्दनतरु
काष्ठमिन्धनं कुरुते ॥ १८० ॥ सुहृदि निरन्तरचित्ते गुण
वति भृत्ये प्रियासु नारीषु । स्वामिनि शक्तिसमेते निवेद्य
दुःखं जनः सुखीभवति ॥ १८१ ॥ अबला यत्र प्रबला बालो
राजा निरक्षरो मन्त्री । नहि नहि तत्र धनाशा जीवित
माशापि दुर्लभा भवति ॥ १८२ ॥ आपदि मित्रपरीक्षा शूर
परीक्षा रणाङ्गणे भवति । विनये वंशपरीक्षा स्त्रियाः परीक्षा
तु निर्धने पुंसि ॥ १८३ ॥ विरला जानन्ति गुणान्विरलाः
कुर्वन्ति निर्धने स्नेहम् । विरलाः परकार्यरताः परदुःखेनापि

दुःखिता विरलाः ॥ १८४ ॥ व्यसनानि सन्ति बहुधा व्यसनद्वयमेव केवलं व्यसनम् । विद्याऽभ्यसनं व्यसनमथवा हरिपादसेवनं व्यसनम् ॥ १८५ ॥ यस्मिन्यथा वर्तते यो मनुष्यस्तस्मिंस्तथा वर्तितव्यं स धर्मः । मायाचारो मायया वर्तितव्यः साध्वाचारः साधुना प्रत्युपेयः ॥ १८६ ॥ लङ्कापतेः संकुचितं यशो यद्यत्कीर्तिपात्रं रघुराजपुत्रः । स सर्व एवादिकवेः प्रभावो न कोपनीयाः कवयः क्षितीन्द्रैः॥१८७॥ गुणा दश स्नानपरस्य साधो रूपञ्च तेजश्च बलञ्च शौचम् । आयुष्यमारोग्यमलोलुपत्व दुःस्वप्ननाशश्च यशश्च मेधाः ॥ १८८ ॥ आत्मा नदी संयमपुण्यतीर्था सत्योदका शीलतटा दयोर्मिः । तत्राभिषेकं कुरु पाण्डुपुत्र न वारिणा शुद्धयति चान्तरात्मा ॥१८९॥ प्रज्ञावृद्धं धर्मवृद्धं स्वबन्धुं विद्यावृद्ध वयसा चापि वृद्धम् । कार्याकार्ये पूजयित्वा प्रसाद्य यः संपृच्छेन्न स मुह्येत्कदाचित् ॥ १९० ॥ विश्वं विलोक्याप्यखिलं तदीयकर्तारमीशं नहि मन्यते यः । अहं हि जातो जनक विनेति न भाषते विज्ञवरः कथं सः ॥ १९१ ॥ यो नोद्धतं कुरुते जातु वेषं न पौरुषेणापि विकत्थतेऽन्यान् । न मूर्छितः कटुकान्याह किञ्चित्प्रियं सदा तं कुरुते जनो हि ॥१९२॥ स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । अर्थज्ञित्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥ १९३ ॥ यथा खरश्चन्दनभारवाही भारस्य वेत्ता न तु

कटुका च वाणी नरस्य चिह्नं नरकागतस्य ॥ २०४ ॥
अनेकशास्त्रं बहुवेदितव्यमल्पश्च कालो बहवश्च विघ्नाः ।
यत्सारभूतं तदुपासितव्यं हंसो यथा क्षीरमिवाम्बुमध्यात्
॥२०५॥ तद्भोजनं यन्मुनिभुक्तशेषं स बुद्धिमान्यो न करोति
पापम् । तत्सौहृदं यत्क्रियते परोक्षं दम्भैर्विना यः क्रियते
स धर्मः ॥ २०६ ॥ बलोपपन्नोऽपि हि बुद्धिमान्नरः परं न-
येन्न स्वयमेव वैरताम् । भिषङ्ममास्तीति विचिन्त्य भक्षयेद-
कारणात्कोऽपि विचक्षणो विषम् ॥ २०७॥ यथा चतुर्भिः
कनकं परीक्ष्यते निघर्षणच्छेदनतापताडनैः । तथा चतुर्भिः
पुरुषः परीक्ष्यते श्रुतेन शीलेन कुलेन कर्मणा ॥ २०८ ॥
इयमुदरदरी दुरन्तपूरा यदि न भवेदभिमानभङ्गभूमिः ।
क्षणमपि न सहे भवादृशानां कुटिलकटाक्षनिरीक्षणं नृपा-
णाम् ॥ २०९ ॥ अर्था हसन्त्युचितदानविहीनलुब्धं भूम्यो
हसन्ति मम भूमिरिति ब्रुवाणम् । जारा हसन्ति तनयानुप-
लालयन्तं मृत्युर्हसत्यवनिपं रणरङ्गभीरुम् ॥ २१० ॥ शक्ते-
नापि सता जनेन विदुषा कालान्तरप्रेक्षिणा वस्तव्यं खलु
वज्रपातविषमे क्षुद्रेऽपि पापे जने । दर्व्यव्यग्रकरेण धूप-
मलिनेनायासयुक्तेन किं भीमेनातिबलेन मत्स्यभवनेऽपूपा न
संघट्टिताः ॥ २११ ॥ सिद्धिं वाञ्छयता जनेन विदुषा तेजो
निगृह्य स्वकं सत्त्वोत्साहवताऽपि दैवगतिषु स्थैर्यं प्रकार्यं क्रमात् ।
देवेन्द्रद्रुहिणोपमैर्बहुगुणैरभ्यर्थितो भ्रातृभिः किं क्लिष्टः सुचिरं

विराटभवने पूर्वं न धर्मात्मजः ॥ २१२ ॥ यदि स्वागतमात्रिका सनामिदं कस्माच्चिरादूरुचयने का वार्ता परिपूर्णकोऽसि नितरां प्रीतोऽस्मि त्वद्दर्शनात् । इत्येवं समुपागतं द्विजवरं सम्भाषयन्त्यादरात्येषां पुस्तकपाणिभूतेन मनसा गेहेषु गच्छन्तु सदा ॥ २१३ ॥ ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो ज्ञानस्योपशमः कुलस्य विनयो वित्तस्य पात्रे व्ययः । अक्रोधस्तपसः क्षमा प्रभवतां धर्मस्य निर्व्याजता सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ २१४ ॥ सिंहो व्याकरणस्य कर्तुरहरत्प्राणान्प्रियान्पाणिनेर्मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिम् । छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलं अज्ञानावृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः ॥ २१५ ॥ यत्र मत्तमयूरचम्पकवने रसालेऽपि काको टङ्के दिना हतमयूरकोकिलकुले काकेषु निवादरः । मातङ्गेन खरक्रयः समतुला कर्पूरकार्पासयोः एषा यत्र विचारणा गुणिगणे देशाय तस्मै नमः ॥ २१६ ॥

## नैयायिकवैयाकरणौ ४७

पीठं रुणद्धि विपणीकुरुते च बुद्धिं सूते च संस्कृतपदप्रचुरारचक्किम । शास्त्रान्तराभ्यसनयोग्यतया युनक्ति तर्कभ्रमो न तनुते किमितीप्रकारम् ॥ १ ॥ गुरोर्गिरः पञ्च दिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयं च । अमी समाघ्राय वितर्कवादाः समागताः कुक्कुटपादमिश्राः ॥ २ ॥ कर्मभ्रम

विचारणा विजहतो भोगापवर्गप्रदां घोषं कंचन कण्ठशोषफलकं कुर्वन्त्यमी तार्किकाः । प्रत्यक्षं न पुनाति नापहरते पापानि पीलुच्छटा व्याप्तिर्नावति नैव पात्यनुमितेर्नो पक्षता रक्षति ॥ ३ ॥ यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम् । स्वजनः श्वजनो मा भूत्सकलं शकलं सकृच्छकृत् ॥ ४ ॥ शब्दशास्त्रमनधीत्य यः पुमान्वक्तुमिच्छति वचः सभान्तरे । बन्द्धुमिच्छति वने मदोत्कटं हस्तिनं कमलनालतन्तुना ॥ ५ ॥

## वैद्यकुवैद्यौ ४८

गुरोरधीताखिलवैद्यविद्यः पीयूषपाणिः कुशलः क्रियासु । गतस्पृहो धैर्यधरः कृपालुः शुद्धोऽधिकारी भिषगीदृशः स्यात् ॥ १ ॥ मस्ते दुःसहवेदनाकवलिते मग्ने स्वरेऽन्तर्गलं तप्तायां ज्वरपावकेन च तनौ तान्ते हृषीकव्रजे । दूने बन्धुजने कृतप्रलपने धैर्यं विधातुं पुनः कः शक्तः कलितामयप्रशमनो वैद्यात्परो विद्यते ॥ २ ॥ वैद्यराज नमस्तुभ्यं यमराजसहोदर । यमस्तु हरति प्राणान्वैद्यः प्राणधनानि च ॥ ३ ॥ चितां प्रज्वलितां दृष्ट्वा वैद्यो विस्मयमागतः । नाहं गतो न मे भ्राता कस्येदं हस्तलाघवम् ॥ ४ ॥ न धातोर्विज्ञानं न च परिचयो वैद्यकनये न रोगाणां तत्त्वावगतिरपि नो वस्तुगुणधीः । तथाप्येते वैद्या इति नरलयन्तो जडजनानसून्मृत्योर्भृत्या इव वत हरन्ते गदजुषाम् ॥ ५ ॥

सुपुत्रः ४९

प्रदोषे दीपकश्चन्द्रः प्रभाते दीपको रविः । त्रैलोक्ये दीपको धर्मः सुपुत्रः कुलदीपकः ॥ १ ॥ एकेनापि सुपुत्रेण विद्यायुक्तेन भासते । कुलं पुरुषसिंहेन चन्द्रेणेव हि शर्वरी ॥ २ ॥ पुष्पस्थाने कृतं येन तपः कष्टातिदुष्करम् । तस्य पुत्रो भवेद्वश्यः समृद्धो धार्मिकः सुधीः ॥ ३ ॥ एकेनापि सुपुत्रेण जायमानेन सत्कुलम् । शशिना चैव गगने सर्वदैवोज्ज्वलीकृतम् ॥ ४ ॥ एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना । वासितं तद्वनं सर्वं सुपुत्रेण कुलं यथा ॥ ५ ॥ दुग्धार्थं यस्य धर्मार्थश्च परिग्रहः । वाक् सत्यवचनार्था च पिता तेनैव पुत्रवान् ॥ ६ ॥ पुन्नाम्नो नरकाद्यस्मात्त्रायते पितरं सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥ ७ ॥ मेधया वा महारिण्या यो यशेन धनेन वा । धुरं वहति गोत्रस्य जननी तेन पुत्रिणी ॥ ८ ॥ मधु किं सुतवचनं मधुतरं किं तदेव सुतवचनम् । स्पर्शान्मुखतम किं श्रुतिशरीरस्पर्शः तदेव सुतवचनम् ॥ ९ ॥ पात्रं न तापयति नैव मलं प्रसूते स्नेहं न संहरति नैव गुणान् क्षिणोति । द्रव्यावसानसमये चलतां न धत्ते सत्पुत्र एव कुलसद्मनि कोऽपि दीपः ॥ १० ॥

कुपुत्रः ५०

एकेनापि कुपुत्रेण सिंही स्वपिति निर्भयम् । दशभिः सह पुत्रैश्च भारं वहति रासभी ॥ १ ॥ जातिमीतः सुतो

जातः कथं न दहनात्मकः । विनीतस्तु सुतो जातः कथं न पुरुषोत्तमः ॥ २ ॥ यदि पुत्रः कुपुत्रः स्याद्व्यर्थो हि धनसञ्चयः । यदि पुत्रः सुपुत्रः स्याद्व्यर्थो हि धनसञ्चयः ॥३॥ एकेन शुष्कवृक्षेण दह्यमानेन वह्निना । दह्यते तद्वनं सर्वं दुष्पुत्रेण कुलं यथा ॥ ४ ॥ निरुत्साहं निरानन्दं निर्वीर्यमरिनन्दनम् । मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ॥ ५ ॥ यस्य पुत्रो न वै विद्वान्न शूरो न च धार्म्मिकः । अप्रकाशं कुलं तस्य नष्टचन्द्रेव शर्वरी ॥६॥ किं तया क्रियते धेन्वा या न दोग्ध्री न गर्भिणी । कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः ॥७॥ वरं न राज्यं न कुराजराज्यं वरं न रामा न कुरामरामा । वरं न पुत्रो न कुपुत्रपुत्रो वरं न शिष्यो न कुशिष्यशिष्यः ॥ ८ ॥ वरं गर्भस्रावो वरमृतुषु नैवाभिगमनं वरं जातः प्रेतो वरमपि च कन्यैव जनिता । वरं वन्ध्या भार्या वरमपि च गर्भेषु वसतिर्न चाविद्वान् रूपद्रविणगुणयुक्तोऽपि तनयः ॥ ९ ॥ पित्रोर्नैव वचः शृणोति दिवसत्यागे व्रजत्यालयं यान्तीभिर्युवतीभिरध्वनि मुहुः कौतूहलं विन्दति । बन्धूनामुपदेशवाचि वदति क्रोधैकतानं वचः साधून्निन्दति दुर्जनञ्च मनुते मित्रं कुपुत्रो जनः ॥ १० ॥

———:०:———

सदा गावः शुचयो विश्वपावनाः सदा देवा नरोत्तमः ॥१॥

कीर्तनं श्रवणं दानं दर्शनं चापि पार्थिव । गवां प्रशस्यते वीर सर्वपापहरं शिवम् ॥ २ ॥ गावो लक्ष्म्याः सदा मूलं गोषु पाप्मा न विद्यते । गावो यज्ञस्य नेत्र्यो वै तथा यज्ञस्य ता मुखम् ॥ ३ ॥ अमृतं ह्यक्षयं दिव्यं क्षरन्ति च वहन्ति च । अमृतायतनाश्चैताः सर्वलोकनमस्कृताः ॥ ४ ॥ गावः स्वर्गस्य सोपानं गावः स्वर्गेऽपि पूजिताः । गावः कामदुहो देव्यो नान्यत्किञ्चित्परं स्मृतम् ॥ ५ ॥ गोभिस्तुल्यं न पश्यामि धनं किञ्चिदिहाच्युतम् । इत्येतद्गोषु मे प्रोक्तं माहात्म्यं भरतर्षभ ॥ ६ ॥

ओं द्यौः शान्तिरन्तरिक्ष ँ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्व ँ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ओं शान्तिः शान्तिः शान्तिः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य पण्डित स्वामी अच्युतानन्द सरस्वतीति नामधेयैः संगृहीतायां व्याख्यान मालायामुत्तरार्धं समाप्तं समाप्तश्चायं ग्रन्थः ॥ * ओ३म् *

